स्वा एव अवस्था यस्याः तस्याः। सम्भावनम् स्वीकरणं प्रार्थितमिति यावत्। अत्र द्वौ क्रमवन्तौ कोटिद्वयस्य महदन्तरं सूचयतः। स्फुरन्ति उपतिष्ठन्ति। अभ्युदयाः सौभाग्यातिशयाः। निष्पन्नप्रायमपि समाप्तप्रायमपि प्रभुप्रयोजनं प्रभुमुद्दिश्य कर्त्तव्यम्। धृतिम् सन्तोषम् आवहति आनयति। भृत्यभावः सेवाकार्य्यम् प्रभोरित्यर्थः। तत्र हेतुमाह कुतः इति।

**Beng. Trans.** ( তারপর যথানির্দ্দিষ্ট যৌগন্ধরায়ণ প্রবেশ করিলেন )

যৌগন্ধরায়ণ—হাঁ ইহাই ঠিক। এ বিষয়ে আর সন্দেহ কি? ( পুনর্ব্বার 'দ্বীপাদন্য-স্মাৎ' এই শ্লোক পাঠ করিয়া ) তাহা না হইলে সিদ্ধপুরুষের আদেশে বিশ্বাস স্থাপনপূর্ব্বক সিংহলরাজকুমারীকে ( মহারাজের নিমিত্ত ) প্রার্থনা করিলে সমুদ্রে যানভঙ্গনিবন্ধন তিনি ( রাজকুমারী ) জলমগ্ন হইলে তাঁহার কাষ্ঠফলকপ্রাপ্তিই বা কিরূপে হইল? আর সিংহল হইতে প্রত্যাগত কৌশাম্বীদেশীয় বণিকই বা সেই অবস্থায় তাঁহাকে কিরূপে পাইলেন? কিরূপেই বা রত্নমালাচিহ্নের দ্বারা পরিচিত হইয়া এই ( রাজধানীতে ) আনীত হইলেন? ( আনন্দের সহিত ) আমাদের মহারাজ সর্ব্বপ্রকারে অভ্যুদয় প্রাপ্ত হইতেছেন। ( চিন্তা করিয়া ) আমিও এই রাজকন্যাকে সগৌরবে মহিষীর হস্তে অর্পণ করিয়া ঠিকই করিয়াছি। শুনিতে পাইতেছি যে, কঞ্চুকী বাভ্রব্যও সিংহলনৃপতির অমাত্য বসুভূতির সহিত কোনও রূপে সমুদ্র হইতে উদ্ধার পাইয়া কোশলরাজ্য উচ্ছেদনের নিমিত্ত অভিযানকারী রুমণ্বানের সহিত মিলিত হইয়াছেন। সুতরাং এইরূপে প্রভুর কার্য্য সমাপ্ত-প্রায় হইলেও আমি স্থৈর্য্য অবলম্বন করিতে পারিতেছি না। ভৃত্যভাব নিশ্চয়ই অত্যন্ত ক্লেশদায়ক। কেন না—

**Eng. Trans.**—(Then enters Yaugandharayana as referred to) Yau—So it is, there is no doubt. ( Repeats the stanza द्वीपात् etc. ) Otherwise, how chanced it that the daughter of the king of Simhala, who was asked for in marriage owing to our faith put in the prediction of the seer, caught hold of a plank as she was drowned in the sea due to the wreck of her ship? And how could she be rescued in that condition by a merchant of Kaushámbi who was returning from Simhala and be brought here on the recognition of the jewelled necklace as a sign? ( Joyfully ) By all means good luck attends our master. (Reflecting) I have also acted properly by making her over to

the chief Queen respectfully. And I understand that the chamberlain Babhravya being reascued from the sea with great difficulty along with Vasubhuti the minister of the king of Simhala, has been united with Rumanvan who was marching with a view to destroying the Koshala kingdom. So, though the business of my master is almost finished, yet it cannot bring me satisfaction—which shows that servitude is surely a painful thing. For—

प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ
देवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि
स्वेच्छाचारी भीत एवास्मि भर्त्तुः ॥७॥

स्वामिनः प्रभोः उदयनस्य वृद्धिहेतौ रत्नावलीपरिणयेन चक्रवर्त्तित्वप्राप्तिरूपाभ्युदयम् आवहति अस्मिन् प्रारब्धे कार्य्ये इत्थं रत्नावल्याः दैववशात् फलकासादनादिरूपेण प्रकारेण दैवेन दत्तहस्तावलम्बे दत्तः हस्तस्य अवलम्बः आश्रयः यस्मिन् सहायीभूते इत्यर्थः । सिद्धेः कर्म्मसाफल्यस्य । सिद्धे इति पाठे सिद्धादेशे इत्यर्थः । भ्रान्तिः सन्देहः नास्ति इति सत्यं ; तथापि एवं दैवानुकूल्यसत्त्वेऽपि स्वेच्छाचारी राज्ञः अनुमतिमन्तरेण कर्म्म कुर्व्वन् भर्त्तुः भीतः अस्मि । तस्य हितार्थं क्रियमाणेऽपि अस्मिन् कर्म्मणि तस्य राज्ञः अनुमोदनं स्याद् वा न वा इति भिया मे मनः चाञ्चल्यमवाप्नोति । सर्व्वथा भृत्यस्य स्वातन्त्र्याभावादित्यर्थः । शालिनी वृत्तम् । तल्लक्षणं—"मात्तौ गौ चेच्छालिनी वेदलोकैः" ॥ ७ ॥

**Prose.** दैवेन इत्थं दत्तहस्तावलम्बे स्वामिनः वृद्धिहेतौ अस्मिन् प्रारब्धे सिद्धेः भ्रान्तिः नास्ति ( इति ) सत्यम्, तथापि स्वेच्छाचारी ( अहम् ) भर्त्तुः भीत एव अस्मि । ॥ ७ ॥

প্রভুর অভ্যুদয়ের কারণীভূত এইরূপ কার্য্যে দৈব সহায় হওয়ায় কার্য্যের সাফল্য বিষয়ে আর কোনও সন্দেহ নাই সত্য ; কিন্তু তথাপি স্বতঃপ্রবৃত্ত হওয়ায় আমি প্রভুকে ভয় পাইতেছি ।৭।

**Eng. Trans.** Though in this undertaking which is meant for the elevation of my master's power and in which the fate has extended its helping hand, there is nothing to doubt about its success, yet I am afraid of my master on account of my proceeding at my own will. 7.

( नेपथ्ये कलकलः )

यौगन्धरायणः । ( आकर्ण्य ) अये, मधुर[1]मभिहन्यमानमृदु-मृदङ्गानुगतसङ्गीतमधुरः पुरः पौराणां समुच्चरति चर्च्चरीध्वनिः । तथा तर्कयामि यदेनं मदनमहमहीयांसं पुरजनप्रमोदमवलोकयितुं प्रासादाभिमुखं प्रस्थितो देवः । य एषः—

विश्रान्तविग्रहकथो रतिमान् जनस्य
चित्ते वसन् प्रियवसन्तक एव[2] साक्षात् ।
पर्य्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥ ८ ॥

( ऊर्ध्वमवलोक्य ) अये, कथमधिरूढ़ एव देवः प्रासादम् । तद् यावद् गृहं गत्वा कार्य्यशेषं चिन्तयामि[3] । ( इति निष्क्रान्तः )

इति विष्कम्भकः

अभिहन्यमानाः ताड्यमाना मृदवः धीरस्वनाः ये मृदङ्गाः तैः अनुगतम् अनुयातं यद् गीतं तेन मधुरः चर्च्चरीध्वनिः इत्यस्य विशेषणम् । हस्ततालैः मिश्रीभूतः वाद्यविशेषः समुच्चरति उत्पद्यते । अत्र उत्पूर्व्वकात् चरधातोः अकर्म्मकत्वात् 'उदश्चरः सकर्म्मात्' इत्यस्य नाथं विषयः । तर्कयामि अनुमिनोमि । मदनमहमहीयांसं मदनस्य महः उत्सवः तेन महीयांसं महत्तरम् । पुरजनप्रमोदम् नगरवासिनामानन्दम् ।

1 यथायम् । 2 एवः । 3 सम्भावयामि ।

य एषः इति।—( राजपक्षे )—विश्रान्तविग्रहकथः विश्रान्ता निवृत्ता विग्रहस्य युद्धस्य कथा यस्य सः सर्व्वेषामरीणां समूलघातं निहतत्वात् इत्यर्थः। रतिमान् प्रजासु अनुरागवान् राजा वत्सेश्वरः। जनस्य चित्ते वसन् लोकचित्तहारी प्रकृतिप्रियत्वात् प्रियवसन्तकः प्रियः वसन्तकः तन्नामा विदूषकः यस्य सः साक्षात् एव निजमहोत्सवदर्शनाय निजः आत्मीयः स्वकः आत्मना प्रवर्त्तितत्वात्, यः महोत्सवः कामदेवोत्सवः तस्य दर्शनाय वत्सेश्वरः कुसुमचापः कामदेव इव अभ्युपैति आगच्छति। ( कुसुमचापपक्षे )—विश्रान्ता विग्रहस्य शरीरस्य कथा यस्य कामदेवस्य, तस्य शिवरोषानले भस्मीभूतत्वात् अनङ्गत्वम्। रतिमान् रतिः कामदेवस्य स्त्री विद्यते अस्य इति। जनस्य चित्ते वसन् कामदेवस्य मनोभवत्वात् मनसिजत्वात् इति यावत्। प्रियवसन्तकः प्रियः वसन्तः वसन्तर्त्तुः यस्य सः 'शेषाद् विभाषा' इति समासान्त-कप्। साक्षात् एव शरीरं परिगृह्य एव निजमहोत्सवदर्शनाय मदनमहोत्सवदर्शनाय अभ्युपैति आगच्छति। वसन्ततिलकं वृत्तम्। तल्लक्षणम्—'ज्ञेयं वसन्ततिलकं तभजा जगौ गः।' श्लेषानुप्राणितोपमालङ्कारः। साक्षात् एव इत्यादौ उत्प्रेक्षालङ्कारश्च। तयोः संसृष्टिः॥ ८॥

विष्कम्भकः। तल्लक्षणम् दशरूपके—"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः" इत्यादि।

**Prose.** विश्रान्तविग्रहकथः रतिमान् जनस्य चित्ते वसन् प्रियवसन्तकः साक्षात् एव निजमहोत्सवदर्शनाय पर्युत्सुकः वत्सेश्वरः कुसुमचाप इव अभ्युपैति॥ ८॥

**Beng. Trans.** ( যবনিকামধ্যে কোলাহলশব্দ ) ( শ্রবণ করিয়া ) অহো মৃদঙ্গের মৃদুমধুর তাড়নের সহিত অনুগত সঙ্গীত দ্বারা মনোরম চর্চ্চরীধ্বনি ( মিশ্রীকৃতবাদ্য ) উত্থিত হইতেছে। তাহাতে আমার বিবেচনা হইতেছে যে মদন-মহোৎসবের দ্বারা মহীয়ান্ পৌরজনের আনন্দ দেখিবার জন্য প্রাসাদের দিকে মহারাজ গিয়াছেন। (রাজপক্ষে—বৎসেশ্বর) যুদ্ধাদির কথা নিবৃত্ত হওয়ায় প্রকৃতিপুঞ্জে অনুরাগবান্ হইয়া লোকের চিত্ত আকর্ষণ করতঃ বয়স্য বসন্তকের সহিত নিজের অনুষ্ঠিত মদনোৎসব দেখিবার জন্য উৎসুক হইয়া কামদেবের ন্যায় আসিতেছেন। [ ( মদনপক্ষে ) কামদেব শরীরের কথা ভুলিয়া ( অর্থাৎ অনঙ্গরূপে ) রতিদেবীর সহিত জনগণের চিত্তে বসতি লাভ করতঃ প্রিয় সখা বসন্তঋতুর সহিত যেন সশরীরে নিজের মহোৎসব দর্শন করিবার জন্য উৎসুক হইয়া আগমন করিতেছেন ]॥ ৮॥

( ঊর্দ্ধে অবলোকন করিয়া ), অহো, এই যে মহারাজ প্রাসাদে অধিরোহণ করিয়াছেন অতএব গৃহে যাইয়া অবশিষ্ট কার্য্য চিন্তা করিব। ( প্রস্থান )

বিষ্কম্ভক সমাপ্ত

**Eng. Trans.** (A tumultuous noise behind the scenes) Oh, as there arises the hum of merriment of the people of the city sweetened by a song accompanied by a tabor gently beaten, so I think that the king has started towards the palace to enjoy the merriment of the citizens accentuated by the spring-festival as arranged by himself.

Eager as it were to see his own festival, verily the lord of Vatsa comes forth like the flower-bowed deity himself setting at rest all tales of war ( or of body ), full of joy ( or accompanied by his consort Rati ) dwelling in the hearts of the people and attended by his favourite Vasantaka (or Spring). 8 ( Looking up ) Ah, now his Majesty has alreaay ascended the palace-top. So, now I will go home and think out wha remains to be done.

Here ends the Prelude.

(ततः प्रविशत्यासनस्थो गृहीतवसन्तोत्सववेशो राजा विदूषकश्च)

राजा—( सहर्षमवलोक्य ) सखे वसन्तक !

विदूषकः—आणवेदु भवं । (क)

राजा—राज्यं निर्ज्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः ।
प्रद्योतस्य सुता वसन्तसमयस्त्वं चेति नाम्ना धृतिं
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥८॥

(क) आज्ञापयतु भवान् ।

राज्यम् इति । राज्यं निर्ज्जितशत्रु, निर्ज्जिताः शत्रवः यस्य तत् राज्यमित्यस्य विशेषणम् । योग्यसचिवे यौगन्धरायणे समस्तः भरः न्यस्तः दत्तः । प्रजाः प्रकृतयः प्रशमिताशेषोपसर्गाः प्रशमिताः दूरीकृताः अशेषाः उपसर्गाः उपप्लवाः यासां ताः, एवं सम्यक्पालनेन लालिताः संवर्द्धिताः भवन्ति । प्रद्योतस्य अवन्तीश्वरस्य सुता वासवदत्ता मत्पत्नी रमणीयगुणसम्पन्ना इत्यर्थः । त्वं विदूषकः इत्यर्थः । वसन्तसमयश्च अयम् । युवयोः उभौ वसन्तविदूषकौ परमानन्दप्रदौ इत्यभिप्रायः । कामः मदनः नाम्ना मदनोत्सव इति निजनाम्ना उत्सवस्य अनुष्ठितत्वात् कामं पर्य्याप्तं धृतिं सन्तोषं उपैतु प्राप्नोतु, उत्सवस्य तन्नाममात्रेण एव तस्य आनन्दो भवतु । अहं मन्ये, मम पुनः अयं महान् उत्सवः प्रजानामुपप्लवादिविहीनत्वात् । एतेन राज्ञः उदयनस्य लोकप्रियत्वं व्यज्यते । शार्दूलविक्रीड़ितं वृत्तम् । राज्ञः महोत्सवं प्रति पूर्व्वपूर्व्वपदानां हेतुतया काव्यलिङ्गमलङ्कारः । महोत्सवोपभोगे कामदेवापेक्षया राज्ञः उत्कर्षे व्यज्यमाने व्यतिरेकालङ्कारध्वनिः । अत्र श्लोके नायकस्य धीरललितत्वम् उक्तम् ॥८॥

**Prose.** राज्यं निर्ज्जितशत्रु ( भवति ), योग्यसचिवे समस्तः भरः न्यस्तः । प्रजाः प्रशमिताशेषोपसर्गाः (सत्यः ) सम्यक्पालनलालिताः (भवन्ति)। प्रद्योतस्य सुता, वसन्तसमयः त्वं च ;—इति नाम्ना कामः कामं धृतिमुपैतु, मम पुनः अयं महान् उत्सवः ( इति ) मन्ये ॥८॥

**Beng. Trans.** ( তারপর বসন্তোৎসবের বেশ ধারণ করিয়া আসনোপবিষ্ট রাজা ও বিদূষক প্রবেশ করিলেন )

রাজা ( আনন্দের সহিত অবলোকন করিয়া )—সখে বসন্তক !

বিদূ—মহারাজ আদেশ করুন।

রাজা—রাজ্য শত্রুশূন্য হইয়াছে, যোগ্য অমাত্যের উপর সমস্ত ভার ন্যস্ত করা হইয়াছে। নানাপ্রকার উপদ্রব দূরীভূত হওয়ায় প্রজাগণ সম্যগ্‌রূপে পরিপালিত হইতেছে। মহারাজ প্রদ্যোতের কন্যা ( আমার স্ত্রী বাসবদত্তা ); তুমি এবং এই বসন্তকাল ( রহিয়াছ ) ; ইহাতে মদনদেব উৎসবের নামমাত্রেই সন্তোষলাভ করুন ; কিন্তু আমি মনে করি, ইহা আমার পক্ষে একটী মহান্ উৎসব ।৯।

**Eng. Trans.** ( Then enter the king and the jester attired in the costume of the Spring-festival and seated on seats)

King. ( Looking with joy ) My dear Vasantaka !

Jester. What does your Majesty command ?

King. My kingdom is bereft of enemies ; the charge has been laid upon a worthy minister. The subjects have been duly looked after on occount of all of their troubles being removed. Here are the daughter of Pradyota, the spring season and yourself. Let the god of love attain satisfaction as much as he can from the mere name of the festival ; but I think it is a great festival to me. 9.

**Eng. Expl.** Here the king Udayana attending the Spring-festival refers to the self-complacence which he has got, in course of his speech with the jester. As a dutiful king he has purged the state of all disturbing elements; he has relieved his own people of all troubles that often visited them; he has confidently laid all the charges of the kingdom over his faithful and worthy minister Yaugandharáyana. He has got a qualified wife like Vásavadattá the daughter of king Pradyota. The ever-gay jester Vasantaka was there ; the time was the charming spring season. Considering all these favourable and joyful circumstances the king says that under the collocation of these circumstances he

feels a unique joy ; but as regards the god of love, he merely attains satisfaction by the festivity being celebrated in his name only. This shows how king Udayana was a dutiful king and much light is thrown on his character by this stanza.

विदूषकः—( सहर्षम् ) भो वअस्स, एव्वं णेदं। अहं उण जानामि ण भवदो ण कामदेवस्स मम ज्जेव्व एक्कस्स बह्मणस्स[1] अअं मअनमहुस्सवो जेण[2] पिअवअस्सेण एव्वं मन्तीअदि। ( विलोक्य ) ता किं उण इमिणा। प्रेक्ख दाव इमस्स महुमत्त-कामिणीजणसअंगाहगहिदसिङ्गकजलप्पहारणच्चन्तणाअरजणज-णिदकोदूहलस्स समन्तदो सुव्वत्त[3]मद्दलुद्दामचच्चरीसद्दमुहर-रत्थामुहसोहिणो पइण्णपडवासपुञ्जपिञ्जरिज्जन्त[4]दिसामुहस्स सिरिअं[5] मअण-महुस्सवस्स। (क)

राजा—( सहर्षं समन्तादवलोक्य ) अहो, परां कोटिमधिरोहति प्रमोदः पौराणाम्।

(क) भो वयस्य, एवं न्विदम्। अहं पुनर्जानामि न भवतः न कामदेवस्य मम एव एकस्य ब्राह्मणस्य मदनमहोत्सवो येन प्रियवयस्येन एवं मन्त्र्यते। तत् किं पुनरनेन। प्रेक्षस्व तावत् अस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतशृङ्गकजलप्रहारनृत्यन्नागरजनजनितकौतूहलस्य समन्ततः सुव्यक्तमर्द्दलोद्दामचर्चरीशब्दमुखररथ्यामुखशोभिनः प्रकीर्णपट-वासपुञ्जपिञ्जरीक्रियमाण-दिशामुखस्य श्रियं मदनमहोत्सवस्य।

भो वयस्य इति। वयस्य इयि राजानमुद्दिश्य सम्बुद्धिः। 'वयस्य राजन्निति भवेद् वाच्यो महीपतिः'—इति भरते। अयमेव उत्सवः अस्य ब्राह्मणस्य न वायं तव न वा कामदेवस्य। मधुना वसन्तोत्सवेन मत्तः कामिनीजनः तस्य स्वयं ग्राहः स्वेच्छया ग्रहणं तेन गृहीतानि यानि शृङ्गकाणि (पिचकारीति भाषा ) तन्निर्गतं जलं तस्य प्रहारः तेन नृत्यन्तः पौराः ये जनाः तैः जनितं कौतूहलं यस्मिन् तस्य मदनमहोत्सवस्य

1 बम्हणस्स अअं। 2 जस्स। 3 सुव्वन्त। 4 दह। 5 सच्छिरिअदं।

इत्यस्य विशेषणम्। सुवृत्तं सुवर्तुलं सुनिष्पादितं वा, घुष्यन्त इति पाठे शब्दायमानम्, यत् मर्द्दलं वाद्ययन्त्रविशेषः तेन या उद्दामा चर्च्चरी गीतमिश्रवाद्यविशेषः तस्याः शब्दः तेन मुखरा शब्दायमाना या रथ्या राजपथः तस्य मुखानि तैः शोभते तस्य। प्रकीर्णाः विक्षिप्ताः ये पटवासाः पिष्टातकाः (आविर इति भाषा)। तेषां पुञ्जं तेन पिञ्जरीकृतानि दिशामुखानि दिङ्मण्डलानि यस्मिन् तथाविधस्य। परां कोटिं परां काष्ठाम्। अधिरोहति आरोहति।

**Beng. Trans.** বিদূষক ( সহর্ষে )—হে বয়স্য, ঠিক তাই। আমি কিন্তু জানি যে এই মদনোৎসব আপনারও নয়, কামদেবেরও নয়, ইহা কেবল একা এই ব্রাহ্মণের জন্যই যাহার জন্য প্রিয় বয়স্য এইরূপ বলিতেছেন। যাক্, এই দেখুন যে মদনমহোৎসবে মদ্য-পানে মত্ত কামিনীগণ নিজ নিজ শৃঙ্গক (অর্থাৎ পিচ্‌কারী) স্বহস্তে ধরিয়া জলক্ষেপণ করায় নৃত্যশীল নাগরিক পুরুষগণ কৌতূহলের সৃষ্টি করিতেছে, যাহাতে চতুর্দ্দিকে সুবর্ত্তুল মর্দ্দল-যোগে উদ্দাম গীতধ্বনি দ্বারা মুখর রাজপথসমূহ শোভা পাইতেছে এবং যাহাতে সমস্ত দিঙ্মণ্ডল উৎক্ষিপ্ত পটবাস (অর্থাৎ আবিরচূর্ণ) দ্বারা পিঙ্গল বর্ণ ধারণ করিয়াছে সেই মদন-মহোৎসবের শোভা সন্দর্শন করুন।

রাজা—( আনন্দের সহিত চতুর্দ্দিকে অবলোকন করিয়া ) অহো, পৌরজনগণের আনন্দ পরা কাষ্ঠা লাভ করিয়াছে।

**Eng. Trans.** Jester ( Joyfully )—O friend, it is so. But I know that this Cupid festivity is not meant for you nor for the god of love but only for this Brahmana (or Brahmana-lad—diff. read.) of whom my dear friend has spoken thus. What is the use of this talk ? Now, observe the beauty of this great festival of Cupid,—in which much curiosity (gaiety) has been created by the citizens (males) dancing—as they are struck by showers of water issuing out of the syringes taken of their own accord by the women drunken with wine,—which is beautified by the openings of the streets being resounded with songs (or clappings of hands) accompanied by the sounds of the round tabors beaten on all sides,—and in which the quarters have been coloured by heaps of red powders ( patavasa ) scattered all round.

King (Joyfully looking around )—Ah ! the pleasure of the citizens is attaining its climax.

तथाहि—

कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरै[1]-
र्हेमालङ्कारभाभिर्भरनमितशिरः[2]शेखरैः कैङ्किरातैः ।
एषा वेषाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोशा
कौशाम्बी शातकुम्भद्रवखचितजनेवैकपीता विभाति ॥१०॥

अपिच—

धारायन्त्रविमुक्तसन्ततपयःपूरप्लुते[3] सर्वतः
सद्यः सान्द्रविमर्दकर्दमकृतक्रीडे क्षणं प्राङ्गणे ।
उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः[4]
सैन्दूरीक्रियते जनेन[5] चरणन्यासैः पुरः कुट्टिमम् ॥११॥

विदूषकः । (विलोक्य) एव्वं पि सुविअड्ढ-जणजलभरिदसिङ्गकजलप्पहारमुक्कसिक्कारमणोहरं वारविलासिणीजणविलसिदं आलोएदु प्रियवअस्सो । (क)

(क) एवमपि सुविदग्धजनजलभरितशृङ्गकजलप्रहारमुक्तसीत्कारमनोहरं वारविलासिनीजनविलसितमालोकयतु प्रियवयस्यः ।

तथाहि । कीर्णैः उत्क्षिप्तैः कुङ्कुमक्षोदगौरैः कुङ्कुमस्य चूर्णवत् गौरैः अरुणैः 'गौरोऽरुणे' इत्यमरः । कृतदिवसमुखैः कृतं दिवसस्य मुखं प्रत्यूष इत्यर्थः, यैः उत्कीर्णारुणपटवासैः निखिलदिवसं प्रत्यूष इव प्रतिभातीत्याशयः । तद्वत् पिष्टातकौघैः पटवासपुञ्जैः हेमालङ्कारभाभिः सुवर्णालङ्कारदीप्तिभिः । कैङ्किरातैः किङ्किराताः अशोकाः तेषां विकारैः पुष्पैरित्यर्थः । भरेण नमितम् आनतं शिरसः शेखराणि येषां तैरशोकपुष्पैः अरुणवर्णैः, भरनमितशिखैः इति पाठे शेखरैः इत्यस्य विशेषणत्वम् । वेषेण वस्त्रादिना

1 क्षोदवासैः । 2 नमितशिखैः । 3 प्लुते । 4 विलसत्सिन्दूरसान्द्रारुणम् ।
5 जनस्य ।

अभिलक्ष्यः अनुमेयः स्वविभवः स्वकीयैश्वर्य्यं तेन विजिताः अशेषाय वित्तेशस्य कुवेरस्य कोशाः वित्तसञ्चयाः यया सा कौशाम्बी नगरी शातकुम्भं सुवर्णं 'तपनीयं शातकुम्भम्' इत्यमरः तस्य द्रवः तेन खचिताः अलङ्कृताः जनाः यस्यां सा। सर्व्वत्रारुणवर्णदर्शनादेवमुत्प्रेक्षा। किञ्च एकः प्रधानः पीतवर्णः यस्याः सा विभाति शोभते। कौशाम्बी नगरी सर्व्वथा पीतवर्णा परिलक्ष्यते जनैः। स्रग्धरावृत्तम्। उत्प्रेक्षालङ्कारः। कौशाम्ब्याश्च मदनोत्सवे लोकातिशयसम्पत्तिवर्णनादुदात्तालङ्कारः॥ १०॥

अपिच—धारायन्त्र इति। धारायन्त्रैः शृङ्गकैः नलिकाभिर्वा विमुक्तं सन्ततं निरवच्छिन्नं यत् पयःपूरं जलप्रवाहः तेन प्लुते व्याप्ते सद्यः सान्द्राः निविडाः ये विमर्द्दाः पादैः निष्पेषाः तैः यः कर्द्दमः तस्मिन् क्रीडा यस्मिन् प्राङ्गणे चत्वरे उद्दामानाम् अप्रतिबन्धं नृत्यन्तीनां क्रीड़न्तीनां वा प्रमदानां कपोलेभ्यः निपतत् यत् सिन्दूरं तस्य रागेण लौहित्येन अरुणैः रक्तवर्णैः चरणन्यासैः पदविन्यासैः पुरः, पुनः इति पाठो वा। कुट्टिमं बद्धभूमिः अनेन सैन्दूरीक्रियते अरुणीक्रियते सिन्दूरं क्रियते इति वा पाठः। शार्दूलविक्रीड़ितं वृत्तम्। ॥११॥

सुविदग्धाः क्रीड़ाविषये अभिज्ञाः 'छेको विदग्ध इति। सीत्काराः जलपतनशैत्यात् सीत् इति शब्दाः। वारस्य समूहस्य विलासिन्यः सर्व्वसामान्याः स्त्रियः गणिकाः।

**Prose.** कीर्णैः कुङ्कुमचोदगौरैः क्रतदिवसमुखैः पिष्टातकौघैः हैमालङ्कारभाग्भिः भरनमितशिरःशेखरैः कैङ्किरातैः (अथवा भरनमितशिखैः कैङ्किरातैः शेखरैः—इति पाठः) येषाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोशा एषा कौशाम्बी शातकुम्भद्रवखचितजना इव एकपीता विभाति॥ १०॥

सर्व्वतः धारायन्त्रविमुक्तसन्ततपयःपूरप्लुते सद्यः सान्द्रविमर्द्दकर्द्दमकृतक्रीड़े प्राङ्गणे अयम् उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः चरणन्यासैः अनेन पुरः कुट्टिमं सैन्दूरीक्रियते (अथवा, पाठान्तरे सिन्दूरं क्रियते)॥ ११॥

**Beng. Trans.** দেখ, কুঙ্কুমচূর্ণের ন্যায় অরুণবর্ণ ও ইতস্ততঃ উৎক্ষিপ্ত যে আবীরচূর্ণ (সকল সময়ে) প্রত্যূষের সৃষ্টি করিয়াছে, সেই আবীরচূর্ণ ও স্বর্ণালঙ্কারের দীপ্তি, এবং ভারাবনত অশোকপুষ্পের শিখরসমূহ দ্বারা কৌশাম্বীনগরী নিরবচ্ছিন্ন পীতবর্ণ ধারণ করিয়াছে ও ইহার জনসমূহ গলিতস্বর্ণ দ্বারা খচিত বলিয়া মনে হইতেছে; এবং এই নগরীর বস্ত্রালঙ্কারাদি দর্শনে মনে হইতেছে যে ইহা স্বকীয় বিভব দ্বারা কুবেরের সমস্ত বিত্তসঞ্চয়কে পরাজিত করিয়াছে।১০।

পুনশ্চ—ধারাযন্ত্রবিমুক্ত অবিচ্ছিন্ন জলপ্রবাহ দ্বারা সমস্ত প্রাঙ্গণ পরিপ্লুত হইলে তথায় জনসমূহ পদনিষ্পেষের দ্বারা সদ্যঃ সমুত্থিত কর্দ্দমে ক্রীড়া করিতেছে ; এবং উদ্দাম রমণীগণের কপোলস্থল হইতে বিচ্যুত সিন্দূররাগের দ্বারা অরুণিত চরণবিক্ষেপের দ্বারা এই প্রাঙ্গণের দৃঢ়বদ্ধ ভূমিতল ( কুট্টিম ) কিছুক্ষণের জন্য রক্তবর্ণ ধারণ করিতেছে ।১১।

Since—

**Eng. Trans.** The city of Kaushambi whose own riches displayed by the garments have surpassed the entire treasury of the lord of wealth, glitters yellow everywhere as if its people are all covered with liquid yellow gold with the scattered heaps of Pistataka (red powder), as red as saffron-powder, imparting the spectacle of day-break ( down ),— and with Ashoka flowers, having their tops bent down under their weight and with the brilliance of golden ornaments.

Again,—

In the courtyard which has been all through flooded with showers of water continuously issuing from artificial fountains ( or syringes ) the people are playing in the mud created afresh by the heavy tread of feet, ; and the paved floor is rendered red by the people with their foot-prints that are red on account of the vermiliion-powders falling from the brow of the boisterous ladies. 11.

Jester (Looking)—O dear friend, behold the sporting of the courtesans charming on account of the hissing sound (Sitkara) uttered by them owing to their being struck with the showers of water issuing from the syringes filled with water by the gallants.

राजा—( विलोक्य ) वयस्य, सम्यग् दृष्टं भवता[1] । कुत:—

अस्मिन् प्रकीर्णपटवासकृतान्धकारे
दृष्टो मनाङ् मणिविभूषणरश्मिजालैः ।
पातालमुद्यतफणाकृतिशृङ्गकोऽयं
मामद्य संस्मरयतीव[2] भुजङ्गलोकः ॥१२॥

1 त्वया । 2 तीह ।

विदूषक :—( विलोक्य[1] ) भो वअस्स, पेक्ख पेक्ख। एसा क्खु मअणिआ मअणवसविसंठुलं वसन्ताभिणअं[2] णच्चन्ती चूअलदिआए सह इदो ज्जेव्व आअच्छदित्ति अवलोएदु[3] पिअवअस्सो ॥ (क)

(क) भो वयस्य, प्रेक्षस्व प्रेक्षस्व। एषा खलु मदनिका मदनवशविसंष्ठुलं वसन्ताभिनयं नृत्यन्ती चूतलतिकया सह इत एवागच्छतीत्यवलोकयतु प्रियवयस्यः।

अस्मिन् मदनमहोत्सवे प्रकीर्णः यः पटवासः पिष्टातकः तेन कृतः अन्धकारः अतिप्रभूतपिष्टातकपटलेन सूर्य्यकिरणव्यवधानात्, तस्मिन्। मणिमयानि विभूषणानि तेषां रश्मिजालैः। ( सर्पपक्षे ) मणयः एव विभूषणानि तेषां रश्मिजालैः। मनाक् ईषत् दृष्टः उद्यताः ऊर्द्धीकृताः फणा इव आकृतिः येषां तादृशाः शृङ्गकाः यस्य सः भुजङ्गलोकः ( विटलोकः ) इत्यस्य विशेषणम्। ( सर्पपक्षे ) फणाकृतयः शृङ्गकाः इव इति फणाकृतिशृङ्गकाः 'उपमितं व्याघ्रादिभिरिति' समासः। उद्यताः फणाकृतिशृङ्गकाः येन सः भुजङ्गलोकः (सर्पलोकः) इत्यस्य विशेषणम्। एवम्भूतः भुजङ्गलोकः विटलोकः सर्पलोकश्च माम् अद्य पातालं संस्मरयतीव। अत्रायमभिप्रायः—प्रभूतप्रक्षिप्तपटवासपटलेन कृते अन्धकारे क्रीड़ारतः विटलोकः उद्यतशृङ्गकः स्वमणिभूषणकिरणजालैः ईषद् दृश्यमानः शृङ्गकाकृतिं फणामुद्वहद्भिः शिरःस्थमणिकिरणजालैः पातालप्रदेशस्य घनान्धतमसे ईषद्दर्शनीयशरीरैः भुजङ्गैरध्युषितं पातालं राज्ञः स्मृतिपथं समानयति। अत्र श्लेषोत्प्रेक्षयोः सङ्करः, तयोश्च पुनः आरणालङ्कारेण संसृष्टिः। वसन्ततिलकं वृत्तम् ॥ १२ ॥

विसंष्ठुलं व्याकुलं वसन्ताभिनयं वसन्तव्यञ्जकं "व्यञ्जकाभिनयौ समौ"। नृत्यन्ती गात्रविक्षेपं कुर्व्वती ॥

**Prose.** अस्मिन् प्रकीर्णपटवासकृतान्धकारे मणिविभूषणरश्मिजालैः उद्यतफणाकृतिशृङ्गकः अयं भुजङ्गलोकः मनाक् दृष्टः अद्य मां पातालं संस्मरयति इव ॥१२॥

**Beng. Trans.** রাজা (অবলোকন করিয়া)—বয়স্য, তুমি ঠিকই দেখিয়াছ—কেননা —এই উৎক্ষিপ্ত আবীরচূর্ণ দ্বারা কৃত অন্ধকারের মধ্যে মণিময় অলঙ্কারের কিরণজালে

1 पुरोऽवलोक्य। 2 मअणसरविसमदणाभिणआ। 3 आलोकेदु।

অস্পষ্টভাবে দেখা যাইতেছে যে, কামুকগণ সর্পফণাকৃতি পিচ্‌কারিগুলি উত্তোলিত করিতেছে। শিরোমণির কিরণসমূহ দ্বারা ঈষৎ দৃষ্ট সর্পগণ শৃঙ্গকাকৃতি ফণা উত্তোলন করিয়া (যে পাতালপুরীতে অবস্থান করে)—ইহা যেন আজ আমাকে সেই পাতালপুরী স্মরণ করাইয়া দিতেছে ।১২।

বিদূষক—(অবলোকন করিয়া) বয়স্য, দেখুন দেখুন—এই সেই মদনিকা মদনাবেশে ব্যাকুল হইয়া বসন্তকালোচিত নৃত্য করিতে করিতে চূতলতিকার সহিত এইদিকে আসিতেছে।

**Eng. Trans.** King (Looking)—My friend, you have marked well ; for, in this darkness created by the clouds of Patavása dust, the host of dissolute people lifting up their syringes shaped like the hoods of snakes, (or snakes lifting up their syringe-like hoods), dimly perceptible through masses of rays of jewel-ornaments (or hood-gems) reminds me of the subterranean world. 12.

Jester—Behold, my friend, how this Madaniká accompanied by Chutalatiká is coming towards this direction dancing the Spring-dance (or the dance in the manner suited to the spring season), completety overcome with the influence of the passion of love.

( ततः प्रविशतिः मदनलीलां नाटयन्त्यौ द्विपदीखण्डं गायन्त्यौ चेट्यौ )

मदनिका[1] ( गायति )

कुसुमाउहपिअदूअओ मउलाविदबहुचूअओ ।

सिढिलिअमाणग्गहणओ वाअदि दाहिणपवणओ ॥१३॥ (क)

[2]विअसिअबउलासोअओ [3]उक्कण्ठिअपिअमेलओ ।

पडिवालणअसमत्थओ तम्मइ जुवईसत्थओ ॥१४॥ (ख)

(क) कुसुमायुधप्रियदूतको मुकुलायितबहुचूतकः ।

शिथिलितमानग्रहणको वाति दक्षिणपवनकः ॥१३॥

(ख) विकसितबकुलाशोकक उत्कण्ठितप्रियमेलकः ।

प्रतिपालनासमर्थकस्ताम्यति युवतिसार्थकः ॥१४॥

1 चेट्यौ । 2 विरहविअलिअ, विअसिअबउलासोअओ । 3 कांखिअपिअजण ।

मदनिका—

इह पढमं महुमासो जणस्स हिअआइं कुणइ मिउलाइं ।
पच्छा विज्झइ कामो लद्धपसरेहिं कुसुमबाणेहिं ॥१५॥ (ग)

(ग) अथवा, इह प्रथमं मधुमासः जनस्य हृदयानि करोति मृदुलानि ।
पश्चात् विध्यति कामो लब्धप्रसरैः कुसुमबाणैः ॥१५॥

द्विपदी छन्दोविशेषः प्राकृतपैङ्गले उक्तः, कुसुमायुधेति । कुसुमायुधस्य प्रियः दूतः समासान्तः कप्प्रत्ययः । दक्षिणपवनस्य कामोद्दीपकत्वाद् इत्यर्थः । मुकुलानि सञ्जनितानि एषाम् इति मुकुलायितानि । शिथिलितं शिथिलं कृतं मानस्य अभिमानस्य ग्रहणं यस्मिन् इति समासान्त-कप् । दक्षिणपवने प्रवहति मानिनीनां मानशैथिल्यं जायते इत्यर्थः ॥ १३ ॥

विकसितेति ॥ वसन्ते बकुलाशोकानां पुष्पोद्गमः जायते युवतीनां पादताड़नात् मधुगण्डूषदानेन च । उत्कण्ठितः विरहाद् इत्यर्थः, यः प्रियजनः तस्य मेलकः सङ्गमयिता ; वसन्तसमागमे दक्षिणपवने प्रवाति रागातिशयात् अभिमतजनानां परस्परं 'मिलनं सञ्जायते मानाद्यपगमात् । प्रतिपालने प्रतीक्षायां असमर्थः । युवतीसार्थक युवतीसमूहः ताम्यति ग्लायति ॥ १४ ॥

इहेति । लब्धप्रसरैः लब्धावकाशैः ॥ १५ ॥

**Prose.** कुसुमायुधप्रियदूतकः मुकुलायितबहुचूतकः शिथिलितमानग्रहणकः दक्षिणपवनकः वाति ॥ विकसितबकुलाशोककः उत्कण्ठितप्रियमेलकः प्रतिपालनासमर्थकः युवतिसार्थकः ताम्यति ॥ इह प्रथमं मधुमासः जनस्य हृदयानि मृदुलानि करोति । पश्चात् कामः लब्धप्रसरैः कुसुमबाणैः विध्यति ॥ १३, १४, १५ ॥

**Beng. Trans.** (অনন্তর মদনাবেশ অভিনয় ও দ্বিপদীখণ্ড নামক সঙ্গীত গান করিতে করিতে দুইজন দাসীর প্রবেশ)

মদনিকা—(গান করিতে লাগিল)

পুষ্পবাণ মদনের প্রিয়দূত দক্ষিণপবন আম্রতরুসমূহকে মুকুলিত করিয়া মানিনী-গণের মানগ্রন্থি শিথিল করতঃ প্রবাহিত হইতেছে ।১৩।

( মুখগণ্ডূষ ও পদতাড়নের দ্বারা ) বকুল ও অশোকবৃক্ষকে পুষ্পিত করিয়া উৎকণ্ঠিত

প্রিয়জনের সহিত মিলনের জন্য উৎকণ্ঠা প্রকাশ করতঃ প্রিয়জন-প্রতীক্ষায় অসমর্থ যুবতিবৃন্দ শুকাইয়া যাইতেছে ।১৪।

এইসময়ে বসন্তঋতু জনগণের হৃদয় কোমল করিয়া দেয়, পরে কামদেব অবসর পাইয়া পুষ্পবাণের দ্বারা বিদ্ধ করে। ।১৫।

**Eng Trans.** (Entering two handmaids gesticulating the play of love and singing a Dvipadi song)

Madaniká (sings)—The southern breeze, the messenger of the flower-arrowed god, is blowing having caused the mango trees to blossom and softened the sensitiveness of the ladies. 13.

The host of youthful ladies having caused the Vakula and Ashoka trees to blossom, longing for union with their dear ones but being unable to wait is pining away. 14.

This spring season at this time softens the heart of the people, but the god of love having got the scope pierces (the mind) afterwards with his flowery arrows. 15.

राजा—(निर्वर्ण्य)[1] मधुरोऽयमासां[2] निर्भरः क्रीड़ारसः । तथाहि—

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीवाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः[3]
क्रीड़न्त्याः पीड़येव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥१६॥

विदूषकः—भो वअस्स, अहं वि एदाणं बहुपरिजणाणं मज्झे णच्चन्तो मअणमहूस्सवं माणइस्सं । (क)

राजा—(सस्मितम्) वयस्य, एवं क्रियताम् ।

1 विलोक्य । 2 अहो निर्भरं क्रीड़ारसः परिजनस्य । 3 छर्ज़ः ।

विदूषकः—जं भवं आणवेदित्ति। (उत्थाय चेटीमध्ये नृत्यति) भोदि मअणिए भोदि चूअलदिए मंपि एदं चच्चरिअं[1] सिक्खावेध (ख)

उभे—भो वअस्सहदास, ण क्खु एसा चच्चरी, दिवदीखण्डं क्खु एदं। (ग)

विदूषकः—(सहर्षम्) किं एदिणा खण्डेण मोअआ करीअन्ति ?(घ)

मदनिका—(विहस्य) णहि णहि। पठीअदि क्खु एदं। (ङ)

विदूषकः—(सविषादम्) जइ पठीअदि ता अलं एदिणा। वरं पिअवअस्ससआसं ज्जेव्व गमिस्सं। (गन्तुमिच्छति।) (च)

उभे—एहि कीलह्म। वसन्तअ कहिं गच्छसि ? (इति बहुविधं वसन्तकम् आकर्षतः, विदूषकश्च बलाद् गच्छति)। (छ)

(क) भो वयस्य, अहमपि एतासां बहुपरिजनानां मध्ये नृत्यम् मदनमहोत्सवं मानयिष्यामि।

(ख) यद् भवान् आज्ञापयति इति। भवति मदनिके, भवति चूतलतिके, मामपि एतत् चर्चरिकं शिक्षयतम्।

(ग) भो वयस्यहताश, न खलु एषा चर्चरी, द्विपदीखण्डं खलु एतत्।

(घ) किम् एतेन खण्डेन मोदकाः क्रियन्ते ?

(ङ) नहि नहि, पठ्यते खलु एतत्।

(च) यदि पठ्यते तत् अलम् एतेन। वरं प्रियवयस्यसकाशं गच्छामि।

(छ) एहि क्रीडामः, वसन्तक कुत्र गच्छसि ?

निर्भरः अतिमात्रः। निर्भरत्वस्य कारणं विशदयति स्तन इति। स्तनभरेण विनमत् आनतप्रायं यत् मध्यं कटिदेशः तस्य तस्मिन् भङ्गः तस्मिन् अनपेक्षा अनवधानं यस्याः यथा स्यात् तथा, नृत्यविक्षिप्तचेतसः मध्यभङ्गं प्रति औदासीन्यमिति भावः। क्रीडन्त्याः चौवायाः

1 चच्चरिं।

मधुपानमत्तायाः केशपाशः स्रस्तः विश्लिष्टः नर्त्तनजनिताखिलगात्रविक्षेपादित्यर्थः। पादलग्नौ नूपुरौ द्विगुणतरं क्रन्दतः शब्दं कुरुतः समधिकपादचालनेन इत्यर्थः। अस्याः हारः कम्पानुबन्धात् निरतिशयनिरवच्छिन्नवेपथुयोगात् व्यस्तः विक्षिप्तः सन् अनवरतम् उरः हन्ति पीड़या इव। स्रग्धरावृत्तम्। उत्प्रेक्षालङ्कारः ॥१६॥

**Prose.** स्तनभरविनमन्मध्यभङ्गानपेक्षम् क्रीड़न्त्याः क्षीवायाः अस्याः आकुलः केशपाशः स्रस्तः (सन्) विरचितां स्रग्दामशोभां त्यजति, पादलग्नौ इमौ नूपुरौ द्विगुणतरं क्रन्दतः, कम्पानुबन्धात् व्यस्तः हारः अनवरतं पीडया इव उरः हन्ति ॥ १६ ॥

**Beng. Trans.** রাজা—(বিস্ময়ের সহিত অবলোকন করিয়া) অহো পরিজনের কিরূপ অত্যধিক ক্রীড়াসক্তি !

স্তনভরে দেহ নত হওয়ায় কটিভঙ্গের প্রতি উপেক্ষা করিয়া নৃত্য করায় এই মত্তা রমণীর আকুল কেশরাশি বিক্ষিপ্ত হইয়া বিরচিত পুষ্পমাল্যের শোভা পরিত্যাগ করিতেছে। ইহার পাদলগ্ন এই নূপুর দুইটী দ্বিগুণ ক্রন্দন করিতেছে এবং নিরবচ্ছিন্ন কম্পনহেতু ইহার হার অনবরত বক্ষঃস্থলে যেন যন্ত্রণায় আঘাত করিতেছে। ১৬।

বিদূষক—হে বয়স্য, আমি ইহাদের মধ্যে গমন করতঃ নৃত্য এবং গান করিয়া মদনোৎসবের অভিনন্দন করিব।

রাজা—(হাসিয়া) বয়স্য, এইরূপ কর।

বিদূষক—(উঠিয়া চেটীদ্বয়ের মধ্যে নৃত্য করিলেন) হে মদনিকে, হে চূতলতিকে, তোমরা আমাকেও চর্চ্চরীগীতি শিখাইয়া দাও।

উভয়ে—হে হতভাগ্য বয়স্য, ইহা দ্বিপদীখণ্ড-গীতি, চর্চ্চরী নহে।

বিদূষকঃ—(আনন্দে) এই খণ্ডের ( মিছরীর )দ্বারা কি মোদক প্রস্তুত করা হয় ?

মদনিকা—(হাসিয়া) না না, ইহা কেবল পাঠ করা হয়।

বিদূষকঃ—(বিষাদের সহিত) যদি ইহা পাঠ করা হয়, তাহা হইলে ইহাতে আমার প্রয়োজন কি ? বরং প্রিয় বয়স্যের নিকট যাইব। ( যাইতে উদ্যত )

উভয়ে—এস, আমরা ক্রীড়া করি ; বসন্তক, তুমি কোথায় যাইতেছ ? (এই বলিয়া উভয়ে বহু প্রকারে বসন্তককে আকর্ষণ করিল এবং বিদূষক বলপূর্ব্বক চলিয়া গেল)

**Eng. Tran.**—King (Looking with wonder)—oh, how great is the fondness of our female attendants for dancing! This drunken

lady having danced being regardless of the middle part (waist) of her body being broken owing to its being bent down under the weight of the breasts,—the mass of her dishevelled hair being scattered is forsaking the beauty of chaplets on her head ; these two anklets in her feet are screaming doubly ; and the necklace being tossed on account of continuous trembling is striking her breast out of pain as it were. 16.

Jester—O friend, I like to congratulate this Cupid-festival by dancing and singing in the midst of these two.

King—(Smiling) Let it be done (by you).

Jester—(Rises up and dances in the midst of the two maid-servants) O lady Madaniká, O lady Chutalatiká, please help me to learn this Charchari (a kind of song with clapping).

Both—(Laughing) Oh unfortunate one, it is not a Charchari but a song of Dvipadikhanda metre.

Jester—( Rejoicing ) Are sweets made out of this Khanda (Candy) ?

Madanika—(Laughing) No, no, it is only recited.

Jester—(Sorrowfully) If it is only recited, what is the use of mine with it ? Rather let me go to my dear friend ( desires to go).

Both—Come, let us play. O Vasantaka, where are you going ? (Thus they both lay hold of him, but the jester extricates himself by force).

विदूषकः—( राजानमुपसृत्य[1] ) वयस्स, णच्चिदोह्मि । नहि णाहि कीलिअ पलाइदोह्मि । (क)

राजा—साधु कृतम् ।

चूत—हञ्जे मअणिए, चिरं क्खु अम्हेहिं कीलिदम् । ता एहि, णिवेदेह्म दाव भट्टिणीए सन्देसं महाराअस्स । (ख)

---

1 आकृष्टहस्तं प्रपलाय्य राजानमुपसृत्य ।

मदनिका—एहि तरह्म ।(ग)

उभे—(उपसृत्य) जेदु जेदु भट्टा । भट्टा देवी आणवेदि (इत्यर्धोक्ते लज्जां नाटयन्त्यौ) णहि णहि विण्णवेदि । [घ]

राजा—(सहर्षं विहस्य सादरम्) नन्वाज्ञापयतीत्येव रमणीयम् । विशेषतोऽद्य मदनमहोत्सवे । तत् कथय किमाज्ञापयति देवी ।

विदूषक:—आ: दासीए धीए ! किं देवी आणवेदि ? (ङ)

चेट्यौ—एव्वं देवी विण्णवेदि—अज्ज क्खु मए मअरंदुज्जाणं गदुअ रत्तासोअपाअवदलसंट्ठाविदस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा । तहिं अज्जउत्तेण संणिहिदेण होदव्वम् ।(च)

राजा—(सानन्दम्) वयस्य, ननु वक्तव्यमुत्सवादुत्सवान्तरमापतितम् ।

विदूषक:—भो वयस्स, ता उट्ठेहि तहिं ज्जेव्व गच्छह्म जेण तहिं गदस्स[2] बह्मणबालअस्स मे सोत्थिवाअणं किंपि भविस्सदित्ति । (छ)

(क) वयस्य, नर्तितोऽस्मि । नहि नहि क्रीड़ित्वा पलायितोऽस्मि ।

(ख) हञ्जे मदनिके, चिरं खलु आवाभ्यां क्रीड़ितम् । तदेहि निवेदयाव: तावत् भर्त्त्र: सन्देशं महाराजाय ।

(ग) एहि त्वराव: ।

(घ) जयति जयति भर्त्ता । भर्त्त:, देवी आज्ञापयति । नहि नहि विज्ञापयति ।

(ङ) आ: दास्या: पुत्रि, किं देवी आज्ञापयति ?

(च) एवं देवी विज्ञापयति । अद्य खलु मया मकरन्दोद्यानं गत्वा रक्ताशोकपादप-

1 बह्मणस्स ।

तलसंस्थापितस्य भगवतः कुसुमायुधस्य पूजा निर्व्वर्तयितव्या। तत्र आर्यपुत्रेण सन्निहितेन भवितव्यम्।

(वि) भो वयस्य, उत्तिष्ठ तत्र एव गच्छावः येन तत्र गतस्य ब्राह्मणबालकस्य मे स्वस्तिवाचनं किमपि भविष्यति।

**Beng. Trans.**

বিদূষক—(রাজার নিকটে যাইয়া) বয়স্য, নৃত্য করিয়াছি। না না, আমি ক্রীড়া করিয়া পলায়ন করিয়াছি।

রাজা—ভালই করিয়াছ।

চূতলতিকা—হাঁ, মদনিকে! আমরা অনেকক্ষণ ক্রীড়া করিয়াছি। অতএব, এস, মহারাজের নিকট মহিষীর সংবাদ দিই।

মদনিকা—এস, শীঘ্র যাওয়া যাক্।

উভয়ে—(পরিক্রমণপূর্ব্বক সমীপবর্ত্তিনী হইয়া) মহারাজের জয় হউক। মহারাজ মহিষী আদেশ করিয়াছেন—(এইরূপ অর্দ্ধেক বলিয়া—লজ্জার সহিত) না, না বিজ্ঞপ্তি করিয়াছেন—

রাজা—(সহর্ষে আদর করিয়া হাসিতে হাসিতে) মদনিকে, আজ্ঞা করিয়াছেন—এইরূপ (বাক্য) অত্যন্ত মনোরম—বিশেষতঃ আজ মদনমহোৎসবে। তা বল, মহিষী কি আদেশ করিয়াছেন?

বিদূষক—অরে দাসীপুত্রি! মহিষী কি আদেশ করিয়াছেন?

উভয়ে—দেবী এইরূপ বিজ্ঞপ্তি করিয়াছেন—আজ আমি মকরন্দ-উদ্যানে গিয়া রক্তাশোকতরুমূলে স্থাপিত ভগবান্ কুসুমায়ুধের পূজা সমাপ্ত করিব। তথায় আর্য্যপুত্রকে সন্নিহিত থাকিতে হইবে।

রাজা—(আনন্দের সহিত) বয়স্য, নিশ্চয়ই বলিতে হইবে যে এক উৎসবের পর অন্য একটী উৎসব আসিয়া পড়িয়াছে।

বিদূষক—হে বয়স্য, গাত্রোত্থান করুন, সেইখানেই যাওয়া যাক; কারণ সেখানে গেলে এই ব্রাহ্মণপুত্রের কিছু স্বস্তিবাচন মিলিবে (দান পাওয়া যাইবে)।

**Eng. Trans.** Jester (Approaching the King)—Friend, I have danced; no no, I have escaped after a fun.

King—It is well done.

Chuta—Hallo Madaniká, we have danced for a long time. Let us now go and report the message of the Queen to the King.

Madaniká—Friend, let us be in haste.

Both—(Walking around and approaching) Victory to your Majesty! Your Majesty, the Queen has ordered—(feeling abashed when half-uttered); no no, the Queen has informed—

King—( Rejoicing and laughing ) Oh Madaniká, the expression namely that 'the Queen has ordered' is charming (to hear) specially in this Cupid-festival to-day. However, please say what is ordered by the Queen.

Jester—O you harlot's daughter ! what is the order of the Queen ?

Both—Thus informs the Queen—'To day I shall finish the worship in honour of the flower-weaponed god consecreted under the red Ashoka tree within the Makaranda garden where my husband will have to remain present.'

King—(Rejoicing) Friend, surely it is to be said that a second festivity is come after the first one.

Jester—O friend, get up. Let us go there, as having gone there this Bráhmana lad will receive some gifts (or food) by Svastiváchana (invocation of blessings).

राजा—मदनिके, गम्यतां देव्यै निवेदयितुम् अयमहमागत एव मकरन्दोद्यानमिति।

चेट्यौ—जं भट्टा आणवेदि। (इति निष्क्रान्ते) (क)

राजा—वयस्य! आदेशय मकरन्दोद्यानस्य मार्गम्।

विदूषकः—एदु एदु भट्टा[1]। (ख)

1. भवं।

( इति परिक्रामतः )

विदूषकः—( अग्रतोऽवलोक्य ) एदं[1] मकरंदुज्जाणं, ता एहि पविसह्म । (ग)

( इति प्रविशतः )

विदूषकः—(अवलोक्य सविस्मयम्) भो महाराज[2] ! पेक्ख पेक्ख दाव एदं क्खु मलअमारुदंदोलिद[3]-मउलन्त[4]-सहआरमञ्जरी-रेणुपडलपडिबद्धपडविआणं मत्तमहुअरमुक्कझङ्कारमिलिद-कोइला[5]लावसंगीदसुहावहं तुहागमणदंसिआदरं विअ मअरंदुज्जाणं लक्खीअदि । ता पविसदु भवं । (घ)

राजा—(समन्तादवलोक्य) अहो मकरन्दोद्यानस्य परा श्रीः[6] ! इह हि—

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रान्तिं[7] प्राप्य मधुप्रसङ्ग[8]जनितां मत्ता इवामी द्रुमाः ॥१७॥

(क) यद् भर्त्ता आज्ञापयति ।

(ख) एतु एतु भर्त्ता ।

(ग) एतत् मकरन्दोद्यानं ; तदेहि प्रविशावः ।

(घ) भो महाराज ! प्रेक्षस्व प्रेक्षस्व तावदेतत् खलु मलयमारुतान्दोलितमुकुलायमान-सहकारमञ्जरीरेणुपटलप्रतिबद्धपटवितानं मत्तमधुकर-मुक्तझङ्कार-मिलित-कोकिलालाप-सङ्गीतसुखावहं तवागमनदर्शितादरमिव मकरन्दोद्यानं लक्ष्यते । तत् प्रविशतु भवान् ।

1. भो एदं । 2. वअस्स । 3. मारुदंदोलण । 4. मउलन्त । 5. कोइलाराव । 6. रम्यता । 7. भ्रान्ति । 8. मधुप्रसङ्गमधुना ।

मलयमारुतेत्यादि मकरन्दोद्यानस्य विशेषणम्। मलयमारुतेन आन्दोलिताः कम्पिताः मुकुलायमानाः सहकारमञ्जर्य्यः तासां रेणुपटलेन प्रतिबद्धं सन्नद्धं विरचितमिति यावत् पटवितानं चन्द्रातपः यस्मिन् तत्। चूतमञ्जरीणां रेणुपटलेन उद्याने चन्द्रातपः विरचित इति भावः। कोकिलालापः कोकिलस्वनः कोकिलाराव इति वा पाठः। उद्यानस्य शोभां वर्णयति उद्यदित्यादिना। उद्यताम् उद्‌गच्छतां विद्रुमाणां प्रवालानां—'विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्' इति मेदिनी—कान्तिरिव कान्तिर्येषां तैः किसलयैः पल्लवैः ताम्रां ताम्रवर्णां त्विषं कान्तिं बिभ्रतः धारयन्तः द्रुमा इति शेषः। कलैः मधुरैः भृङ्गाली भ्रमरसमूहः तस्याः विरुतैः कुजितैः अविशदः अस्पष्टः यो व्याहारः भाषितं 'व्याहार उक्तिर्लपितं भाषितम्' इत्यमरः। तस्य लीलां बिभ्रति ये तैः, मत्ता अपि मदावेशात् अस्पष्टोक्तिं कुर्व्वन्ति इति भावः। मलयानिलस्य आहतिभिः ताड़नैः चलैः चञ्चलैः शाखासमूहैः मुहुः घूर्णन्तः भ्रमन्तः। मत्ता अपि मादकत्वप्रभावात् इतस्ततश्च भ्रमन्ति इति भावः। एतादृशाः द्रुमाः मधुप्रसङ्गः (द्रुमपक्षे) मधोः वसन्तकालस्य, तथा च मधुनः मद्यस्य प्रसङ्गः सम्पर्कः तेन जनितां भ्रान्तिं भ्रमणं भ्रमञ्च प्राप्य मत्ता इव दृश्यन्ते इति भावः। भान्तीति पाठे द्रुमाः अधुना मधुप्रसङ्गं प्राप्य मत्ता इव भान्तीति अन्वयः। अत्र श्लेषानुप्राणितोत्प्रेक्षालङ्कारः। शार्दूलविक्रीड़ितं वृत्तम् ॥१७॥

**Prose**. उद्यद्विद्रुमकान्तिभिः किसलयैः ताम्रां त्विषं बिभ्रतः कलैः भृङ्गालीविरुतैः अविशदव्याहारलीलाभृतः मलयानिलाहतिचलैः शाखासमूहैः मुहुः घूर्णन्तः अमी द्रुमाः मधुप्रसङ्गजनितां भ्रान्तिं प्राप्य मत्ताः इव (दृश्यन्ते)। (अथवा पाठान्तरे—अमी द्रुमाः अधुना मधुप्रसङ्गं प्राप्य मत्ता इव भान्ति) ॥१७॥

**Beng. Trans.** রাজা—মদনিকে, যাও গিয়া দেবীকে জানাও যে আমি এখনই মকরন্দোদ্যানে আসিতেছি।

উভয়ে—যাহা মহারাজ আদেশ করেন। (উভয়ে নিষ্ক্রান্ত)

রাজা—বয়স্য, মকরন্দোদ্যানের পথ দেখাও।

বিদূষক—আসুন, আসুন, মহারাজ!

( দুইজনে প্রবেশ করিয়া )

বিদূষক—( বিস্ময়ের সহিত অবলোকন করিয়া ) মহারাজ, দেখুন দেখুন, মলয়-পবনের দ্বারা আন্দোলিত মুকুলিত চুতমঞ্জরীর রেণুসমূহ দ্বারা একটী চন্দ্রাতপ বিরচিত করিয়া এবং মত্ত মধুকরসমূহের ঝঙ্কারমিশ্রিত কোকিলস্বররূপ সঙ্গীতের দ্বারা সুখাবহ হইয়া যেন মকরন্দোদ্যান আপনার আগমনের জন্য সাদর অভিনন্দন প্রকাশ করিতেছে। অতএব আপনি প্রবেশ করুন।

রাজা—(চতুর্দ্দিকে অবলোকন করিয়া) আহা মকরন্দোদ্যানের কি শোভাতিশয়! এখানে—

সমুদ্গত প্রবালের ন্যায় কান্তিবিশিষ্ট পল্লবসমূহের দ্বারা তাম্রবর্ণ আভা ধারণ করিয়া ভৃঙ্গসমূহের মধুর গুঞ্জনের দ্বারা অস্পষ্ট ভাষায় বিলাস প্রকাশ করতঃ মলয়ানিল-তাড়নে চঞ্চল শাখাসমূহ দ্বারা মুহুর্মুহুঃ আন্দোলিত হইয়া বৃক্ষ সকল মধুসম্পর্ক ( মধু—বসন্ত অথবা মদ্য)-জনিত ভ্রান্তি (ভ্রম অথবা ভ্রমণ) লাভ করিয়া উন্মত্তের ন্যায় দেখা যাইতেছে। (পাঠান্তরে—এই বৃক্ষ সকল এখন মধুসংসর্গ পাইয়া উন্মত্তের ন্যায় শোভা পাইতেছে )॥১৭॥

**Eng. Trans.** King—O Madaniká, go and inform the Queen that I am just coming to the Makaranda garden.

Both—As your Majesty commands. (Both exeunt)

King—O friend, show me the path to the Makaranda garden.

Jester—This way, this way, Sire.

(Both enter)

Jester (Looking with wonder)—behold, behold, here is the Makaranda garden that has formed a canopy by a cloud of polens of the newly sprouted mango-blossoms shaken by the southern breeze and that appears pleasant on account of the song in the form of the sweet notes of cuckoos mingled with the sweet humming sound made by the maddened black bees and thus looks ready, as it were, to welcome your approach with due respect. Therefore, please enter it.

King—(Looking around) Oh, how superior is the beauty of the Makaranda garden ! Here—

Assuming the reddish hue by virtue of their newly sprouted twigs possessing the lustre of the shooting corals, and having acquired the semblance of inarticulate speech by the sweet humming sound of the swarms of black bees and every now and then reeling owing to their branches being agitated by the southern breeze, these yonder trees are seen, as if intoxicated, having undergone the to and fro movement caused by (or being under the spell of illusion caused by) the contact with the spring (Or—liquor). [or these yonder trees appear to be intoxicated coming at present in contact with the spring (or liquor)]. 17.

अपि च—

मूले गण्डूषसेकासव इव बकुलैर्वास्यते पुष्पवृष्ट्या
मध्वाताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति।
आकर्ण्याशोकपादाहतिषु च रसितं[1] निर्भरं नूपुराणां
झङ्कारस्यानुगीतैरनुकरण[2]मिवारभ्यते भृङ्गसार्थैः ॥ १८ ॥

विदूषकः—( श्रुत्वा[3] ) भो वअस्स ! ण एदे महुअरा णेउरसद्दं अणुहरन्तो[4] । णेउरसद्दो ज्जेव्व एसो देवीए परिअणस्स । (क)

राजा—वयस्य, सम्यगुपलक्षितं भवता ।

( ततः प्रविशति उज्ज्वलवेशा वासवदत्ता काञ्चनमाला च पूजोपकरणहस्ता[5] सागरिका च )

वासव—हञ्जे कञ्चणमाले ! आदेसेहि मअरंदुज्जाणस्स मग्गं । (ख)

1. रणितं । 2. अनुरणनमिव । 3. पुस्तकान्तरे नास्ति । 4. अणुहरन्ति । 5. गृहीतपूजोपकरणा ।

काञ्चन—एदु एदु भट्टिणी। (ग)

वासव—( परिक्रम्य ) हञ्जे कञ्चणमाले! अध केत्तिअदूरे सो रत्तासोअपाअवो जहिं मए भअवदो कुसुमाउहस्स पूआ णिव्वत्तइदव्वा। (घ)

(क) वयस्य न एते मधुकरा नूपुरशब्दमनुहरन्तः। नूपुरशब्द एव एष देव्याः परिजनस्य।

(ख) हञ्जे काञ्चनमालि, आदेशय मकरन्दोद्यानस्य मार्गम्।

(ग) एतु एतु भर्त्री।

(घ) हञ्जे काञ्चनमालि, अथ कियद्दूरे सः रक्ताशोकपादपः यत्र मया भगवतः कुसुमायुधस्य पूजा निर्व्वर्त्तयितव्या।

मूले इति। मूले तरोरधः वकुलैः पुष्पवृष्ट्या गण्डूषसीकासवः तरुणीनां मुखशीधुः येन वकुलः पुष्पाणि लभते "विकसति वकुलं योषितामास्यमद्यैः" इति कविसमयात्। वास्यते सुगन्धीक्रियते। तरुण्याः मध्वाताम्रे मधुना मद्येन आताम्रे ईषत्ताम्रे मुखशशिनि अद्य बहोः कालादनन्तरमित्यर्थः चम्पकानि भान्ति। मधुपानारुणवदनमण्डले पटुमदुहसनमालोक्य चम्पकानि विकसन्तीति कविसमयः। अशोकपादाहतिषु तरुणीनां पादाघातेन अशोकतरुः पुष्पितो भवति 'पादाघातादशोकः विकसति' इत्यादि कविसमयवचनात्। निर्भरं सान्द्रं नूपुराणां रसितं शब्दं रणताम् नूपुराणामिति वा पाठः। आकर्ण्य श्रुत्वा। भृङ्गसार्थैः मधुपसमूहैः अनुगीतैः गायनैः झङ्कारस्य नूपुरशब्दस्य अनुकरणम् अनुकृतिः आरभ्यते। अनुरणनम् इति वा पाठः। स्रग्धरा वृत्तम्। स्वभावोक्त्युत्प्रेक्षयोः संसृष्टिः॥१८॥

**Prose.** अपिच, वकुलैः पुष्पवृष्ट्या मूले गण्डूषसीकासवः वास्यते इव। तरुण्याः मध्वाताम्रे मुखशशिनि चिरात् अद्य चम्पकानि भान्ति। अशोकपादाहतिषु नूपुराणां निर्भरं रसितम् आकर्ण्य भृङ्गसार्थैः झङ्कारस्य अनुगीतैः अनुकरणम् आरभ्यते इव ॥ १८ ॥

**Beng. Trans.** পুনশ্চ, ( অদ্য ) বকুলবৃক্ষসমূহ পুষ্পবর্ষণ দ্বারা মূলদেশে বিক্ষিপ্ত

যুবতীগণের মুখাসবকে যেন সুগন্ধ করিতেছে। তরুণীর মুখচন্দ্র মদ্যপানের দ্বারা ঈষৎ সহাস্য তাম্রবর্ণ ধারণ করিলে পর আজ বহুদিন পরে চম্পকপুষ্পসমূহ (যেন) শোভা পাইতেছে। অশোকবৃক্ষে পাদাঘাতকালে নূপুরসমূহের গম্ভীর শব্দ অনুক্ষণ শুনিয়া ভ্রমরগণ যেন গীতের দ্বারা নূপুরধ্বনির অনুকরণ করিতেছে ॥১৮॥

বিদূষক—(শুনিয়া) হে বয়স্য, নূপুরশব্দ যে অনুকরণ করিতেছে ইহারা মধুকর নহে। এই নূপুরশব্দ নিশ্চয়ই মহিষীর পরিজনবর্গের।

রাজা—বয়স্য, তুমি ঠিকই অবধারণ করিয়াছ।

(তারপর উজ্জ্বলবেশ ধারণ করিয়া বাসবদত্তা ও কাঞ্চনমালা এবং পূজোপকরণ হস্তে করিয়া সাগরিকা প্রবেশ করিলেন)

বাসবদত্তা—ওলো কাঞ্চনমালে, মকরন্দ উদ্যানের পথ দেখাও।

কাঞ্চন—দেবি, আসুন আসুন।

বাসব—(পরিক্রমণ করিয়া) ওলো কাঞ্চনমালে! সে রক্তাশোকতরু আর কতদূর?—যেখানে আমি ভগবান্ কুসুমায়ুধের পূজা করিব।

**Eng. Trans.** Also,—

Tthese Vakula trees are rendering fragrant as it were, the mouthfuls of wine (of the ladies) thrown at their root. The moon-like faces of the youthful ladies having grown reddish with the flush of wine, the Cham-paka flowers appear to be smiling as it were to-day after a long time. Hearing the deep jingling sounds of the (ládies') anklets at the time of striking their feet against the Ashoka trees, swarms of bees are imitating as it were the jingling sounds by their humming song. 18.

Jester (Hearing)—O friend, these are not the bees imitating the jingling of the anklets, but this is the sound of the anklets of the attendants of the Queen.

King—You have ascertained rightly.

(Then enter Vásavadattá in bright attire and Kánchanamálá and Ságariká with the articles of worship)

Vásava.—Oh Kánchanamálá, show me the path leading to the Makaranda garden.

Kánch.—By this way, by this way, madam.

Vása.—(Walking around) O Kánchanamálá, how much distant is the red Ashoka tree where I shall have to perform the worship of the flower-arrowed god ?

काञ्च—भट्टिणि, आसरणं ज्जेव्व किं ण पेक्खदि भट्टिणी। इअं क्खु सा निरन्तरुव्भिषकुसुमसोहिणी भट्टिणीए पड्डिग्गिहिदा माहवी लदा। एसावि अवरा णोमालिआ लदा जाए अआलकुसुमसमुग्गमसद्धालुणा भट्टिणा अणुदिणं आआसीअदि अप्पा। ता एदं अदिक्कमिअ दीसदि ज्जेव्व सो रत्तासोअपाअवो जहिं देवो पूअं निव्वत्तइस्सदि। (क)

वासव—ता एहि, तहिं ज्जेव्व लहुं गच्छम्ह। (ख)

काञ्चन—एदु एदु भट्टिणी। (ग)

( सर्व्वाः परिक्रामन्ति )

वासव—अअं सो रत्तासोअपाअवो जहिं अहं पूअं निव्वत्तइस्सं। ता पूआनिमित्ताइं उवअरणाइं मे उवणेहि।

सागरिका ( उपसृत्य ),—भट्टिणि एदं सव्वं सज्जम्। (ङ)

वासव ( निरूप्यात्मगतम् )—अहो पमादो परिअणस्स! जस्स ज्जेव्व दंसणपधादो पअत्तेण रक्खीअदि तस्स ज्जेव्व दिट्ठिगोअरं पड़िदा भवे। भोदु, एदं दाव भणिस्सं। ( प्रकाशम् ) हञ्जे सागरिए। कीस तुमं अज्ज मअनमहुस्सवपराहीणे परिअणे सारिअं उज्झिअ इहागदा। ता तहिं ज्जेव्व लहुं गच्छ। एदं पि सव्वं पूओवकरणं कञ्चणमालाए हत्थे समप्पेहि। (च)

1. मे परिअणस्स। 2. चलविखदा भविअ पेक्खिस्सं—एषोऽपि पाठः क्वचित् दृश्यते।

सागरिका—जं भट्टिणी आणवेदि। ( इति कतिचित् पदानि गत्वा आत्मगतम् ) सारिआ मए सुसङ्गदाए हत्थे समप्पिदा। एदंपि अत्थि मे पेक्खिदुं कोदूहलं किं जहा तादस्स अन्तेउरे भअवं अणंगो अच्चीअदि, इह वि तह ज्जेव्व किं अच्चहेत्ति। ता जाव इह पूआसमओ होदि, दाव अहंपि भअवन्तं अणंगं ज्जेव्व पूअइदुं कुसुमाइं अवचिणिस्सं। ( इति कुसुमावचयं नाटयति )

( छ )

(क) भर्त्रि आसन्न एव किं न प्रेक्षते भर्त्री। इयं खलु सा निरन्तरोद्भिन्नकुसुम-शोभिनी भर्त्रा प्रतिगृहीता माधवीलता। एषापि अपरा नवमालिका लता यस्याः अकालकुसुमसमुद्गमश्रद्धालुना भर्त्रा अनुदिनं आयास्यते आत्मा। तत् एतत् अतिक्रम्य दृश्यते एव स रक्ताशोकपादपो यत्र देवी पूजां निर्व्वर्त्तयिष्यति।

(ख) तदेहि तत्र एव लघु गच्छामः।

(ग) एतु एतु भर्त्री।

(घ) अयं सः रक्ताशोकपादपो यत्र अहं पूजां निर्व्वर्त्तयिष्यामि। तत् पूजानिमित्तानि उपकरणानि मे उपनय।

(ङ) भर्त्रि, एतत् सर्व्वं सज्जम्।

(च) अहो प्रमादः परिजनस्य! यस्य एव दर्शनपथात् प्रयत्नेन रक्ष्यते तस्य एव दृष्टिगोचरं पतिता भवेत्। भवतु, एतत् तावत् भणिष्यामि। हञ्जे सागरिके, कथं त्वमद्य मदनमहोत्सवपराधीने परिजने सारिकां उज्झित्वा इहागता। तत् तत्र एव लघु गच्छ। एतदपि सर्व्वं पूजोपकरणं काञ्चनमालायाः हस्ते समर्पय।

(छ) यद् भर्त्री आज्ञापयति। सारिका मया सुसङ्गतायाः हस्ते समर्पिता। एतदपि अस्ति प्रेक्षितुं मे कौतूहलम्—किं यथा तातस्य अन्तःपुरे भगवान् अनङ्गः अर्च्यते, इहापि तथा एव किम् अर्च्यते इति। तद् यावद् इह पूजासमयो भवति, तावदहम् अपि भगवन्तम् अनङ्गमेव पूजयितुं कुसुमानि अवचेष्यामि।

निरन्तरं सन्ततं उद्भिन्नानि प्रस्फुटितानि कुसुमानि तैः शोभते या सा।

अकाले स्वाभाविककुसुमोत्पत्तिकालादन्यस्मिन् समये इत्यर्थः। श्रद्धालुना उत्सुकेन विश्वासवता इति यावत्। आयास्यते आयासः क्रियते। प्रमादः अनवधानता। यस्य एव इति राजानमुद्दिश्यति। दृष्टिगोचरे—दृष्टिविषये। गावः इन्द्रियाणि चरन्त्यस्मिन्निति गोचरः विषयः। मदनमहोत्सवे पराधीनाः नियुक्ताः अन्यकर्मकरणासमर्थाः इत्यर्थः। उज्झित्वा त्यक्त्वा।

**Beng. Trans.**—কাঞ্চন—দেবি, আমরা নিকটেই আসিয়া পৌঁছিয়াছি। আপনি কি দেখিতে পাইতেছেন না যে, এই সেই আপনার পরিগৃহীতা মাধবীলতা নিরন্তর প্রস্ফুটিত কুসুমে শোভিত হইয়া রহিয়াছে। এই আর একটি নবমালিকা লতা। ইহাতে অকাল-পুষ্পোদ্গম হইবে এই বিশ্বাসে মহারাজ নিজে কিরূপ আয়াস পাইতেছেন। ইহা অতিক্রম করিলেই সেই রক্তাশোক বৃক্ষ দেখা যাইবে, যেখানে দেবী মদনদেবের পূজা করিবেন।

বাসব—অতএব সেইখানেই শীঘ্র যাই চল।

কাঞ্চন—দেবী, আসুন আসুন।

( সকলে পরিক্রমণ করিলেন )

বাসব—এই সেই রক্তাশোকবৃক্ষ যেখানে আমি পূজা সমাপ্ত করিব। অতএব পূজোচিত উপকরণসমূহ এইখানে লইয়া আইস।

সাগরিকা—( নিকটে যাইয়া ) দেবি, এই সমস্ত প্রস্তুত রহিয়াছে।

বাসব—(দেখিয়া—স্বগত) অহো পরিজনবর্গের কি অনবধানতা! যাহার দৃষ্টিপথ হইতে ইহাকে অতি যত্নের সহিত রক্ষা করা হইতেছে, ( আজ ) তাহারই দৃষ্টির বিষয়ীভূত হইবে। আচ্ছা, আমি এইরূপ বলিব। (প্রকাশ্যে) সাগরিকে, আজ মদনোৎসবে পরিজনবর্গ কার্য্যব্যাপৃত থাকায় তুমি কেন সারিকাকে পরিত্যাগ করিয়া এখানে আসিয়াছ? অতএব তুমি সেখানে শীঘ্র যাও এবং পূজোপকরণগুলি কাঞ্চনমালার হস্তে অর্পণ কর।

সাগরিকা—দেবী যেরূপ আদেশ করেন। ( কয়েক পদ যাইয়া—স্বগত ) আমি সারিকাকে সুসঙ্গতার হস্তে অর্পণ করিয়াছি। এই পূজা দেখিবার জন্য আমারও কৌতূহল রহিয়াছে। আমার পিতার অন্তঃপুরে ভগবান্ অনঙ্গদেবের যেরূপ পূজা হয়, এখানে ইহা সেইরূপ অথবা অন্যপ্রকার। অতএব, অলক্ষিত থাকিয়া ইহা দেখিব। (পরি-ক্রমণ ও অবলোকন করিয়া ) সুতরাং যতক্ষণ না পূজার সময় হয়, ততক্ষণ আমি ভগবান্ অনঙ্গদেবকে পূজা করিবার জন্য পুষ্প চয়ন করিব। ( নাট্যে কুসুমচয়ন প্রদর্শন )।

**Eng. Trans.** Kánchana—Madam, we have come near. Do you not find the Mádhavi creeper that was accepted by you and that looks beautiful with its bunches of thickly blooming flowers. This is another creeper called Navamáliká. It is for which much trouble is personally undergone by our lord everyday believing it to blossom out of season. Beyond that the red Ashoka tree will be visible, where your ladyship will worship the god of love.

Vásava—Let us go there immediately.

Kánchana—By this way, madam.

( All the female folk walk around )

Vásava—This is that red Ashoka tree where I shall finish the worship. So, come and bring me the articles of worship here.

Ságariká—( Approaching ) All these are ready, madam.

Vásava—(Looking at her—to herself) Oh, how careless are my attendants ! She will probably come within the sight of the very person from whose sight I have taken so much care to conceal her. However, I shall say thus. ( Aloud ) Oh Ságariká, why have you come here leaving the Sáriká (the female parrot ?) when all other attendants are fully engaged in the Cupid-festival ? So, go there immediately leaving all articles of worship in the hands of Kánchanamálá.

Ságariká—As your ladyship commands. ( Then going a few steps—to herself ) I have made over the Sáriká in the hand of Susangatá. I have a curiosity to observe this festival whether the bodiless god of love is worshipped here in the same manner as in the harem of my father or otherwise. So keeping myself concealed I shall watch it. (Going round and seeing) So, until the time for worship comes I shall collect the flowers for worshipping god Cupid ( She gesticulates the action of collecting flowers.)

वासव—कञ्चणमाले ! पड़िट्ठावेहि असोअमूले भअवन्तं पज्जुम्मं । (क)

काञ्चन—जं भट्टिणी आणावेदि । (ख) ( इति तथा करोति )

विदूषकः—(परिक्रम्यावलोक्य च) भो वअस्स ! जधा विस्सन्तो णेउरसद्दो तहा तक्केमि आअदा देवी असोअमूलं त्ति । (ग)

राजा—वयस्य ! सम्यगवधारितम् । पश्य, इयं देवी, या किलैषा—

कुसुमसुकुमारमूर्त्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥ १८ ॥

तदेहि, उपसर्पावः । ( उपसृत्य ) प्रिये वासवदत्ते !—

वासव—( विलोक्य ) कधं अज्जउत्तो । जअदु जअदु अज्जउत्तो । अलंकरेदु इमं देसं आसणपड़िग्गहेण । एदं आसणं । एत्थ उपविसदु अज्जउत्तो । (घ)

( राजा नाट्येनोपविशति )

काञ्चन—भट्टिणि ! [1]सहत्थदिण्णेहिं कुसुमकुंकुमचंदनवा-

(क) काञ्चनमाले, प्रतिष्ठापय अशोकमूले भगवन्तं प्रद्युम्नम् ।

(ख) यद् भर्त्री आज्ञापयति ।

(ग) भो वयस्य, यथा विश्रान्तः नूपुरशब्दः तथा तर्कयामि आगता देवी अशोकमूलमिति ।

(घ) कथम् आर्य्यपुत्रः ! जयति जयति आर्य्यपुत्रः ! अलङ्करोतु इमं देशम् आसनप्रतिग्रहेण । एतदासनम् । अत्र उपविशतु आर्य्यपुत्रः ।

1. सहत्थदिण्णकुङ्कुमचन्दणाणोहिदं कदुअ ।

Susangatá. ( With a smile ) My friend, do not be offended without cause. I have drawn a Rati similar to the Kámadeva drawn by you. Now, oh you taking the thing otherwise, no need of speaking in this way. Disclose to me all the particulars.

सागरिका—( सलज्जा—स्वगतम् ) णं जाणिदह्मि पिअसहीए। (सुसङ्गताया हस्तं गृहीत्वा—प्रकाशम्) पिअसहि! महदी क्खु मे लज्जा, ता तहा करेसु जहा ण कोवि अवरो एदं वुत्तंतं जाणादित्ति। (क)

सुसङ्गता—सहि! मा लज्ज। ईदिसस्स कस्सारअणस्स अवस्सं एव्व ईदिसे वरे अहिलासेण होदव्वं। तहवि जहा ण कोवि अवरो एदं वुत्तंतं जाणिस्सदि तह करेमि। एदाए उण मेहाविणीए सारिआए एत्थ कारणेण होदव्वं। कदावि एसा इमस्स आलावस्स गहिदक्खरा कस्सवि पुरदो मंतइस्सदि। (ख)

सागरिका—( सोद्वेगम् ) सहि! अदोवि मे अहिअदरं संदाओ वड्ढदि। ( इति मदनावस्थां नाटयति ) (ग)

(क) ननु ज्ञातास्मि प्रियसख्या। प्रियसखि, महती खलु मे लज्जा, तत् तथा कुरु यथा न कोऽपि अपरः एतं वृत्तान्तं जानातीति।

(ख) सखि, मा लज्जस्व। ईदृशस्य कन्यारत्नस्य अवश्यम् एव ईदृशे वरे अभिलाषेण भवितव्यम्। तथापि यथा न कोऽपि अपरः एतं वृत्तान्तं ज्ञास्यति तथा करोमि। एतया पुनः मेधाविन्या सारिकया अत्र कारणेन भवितव्यम्। कदाचित् एषा अस्य आलापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यते।

(ग) सखि, अतोऽपि मे अधिकतरं सन्तापो वर्द्धते।

1. सुसङ्गतां हस्ते गृहीत्वा। 2. ता किं दाणिं एत्थ करइस्सं। 3. बाधेदि। 4. मुणालवलआइं। 5. णं भणामि।

सुसङ्गता—(सागरिकाया हृदये हस्तं दत्वा) सहि ! समस्सस समस्सस । जाव इमाए दिग्घिआए णलिणीपत्ताइं मुणालिआइं अ गेण्हिअ लहुं आअच्छामि । ( निष्क्रम्य पुनः प्रविश्य च नाट्येन नलिनीपत्रैः शयनीयं मृणालवलयानि च रचयित्वा परिशिष्टानि नलिनीपत्राणि सागरिकाया हृदये निक्षिपति ) (क)

सागरिका—सहि ! अवणेहि इमाइं णलिणीपत्ताइं मुणालिआइं अ । अलं इमिणा । कीस अआरणे अत्ताणं आआसेसि ?(ख)

दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा ।
पिअसहि ! विसमं पेम्मं मरणं सरणं तु वरमेक्कं[1] ॥१॥ (ग)

( इति मूर्च्छति )

(क) सखि, समाश्वसिहि समाश्वसिहि । यावद् अस्याः दीर्घिकायाः नलिनीपत्राणि मृणालिकानि च गृहीत्वा लघु आगच्छामि ।

(ख) सखि, अपनय इमानि नलिनीपत्राणि मृणालिकानि च । अलमेतेन । कथम् अकारणे आत्मानं आयासयसि ?

(ग) दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणं तु वरमेकम् ॥

ज्ञातास्मि राज्ञः कृते मदनाविष्टाहमिति सुसङ्गतया ज्ञातास्मीत्यर्थः । गृहीताक्षरा भाषणस्य अक्षराणि गृहीत्वा इत्यर्थः । मन्त्रयिष्यते कथयिष्यति । आयासयसि खेदं प्रापयसि ।

दुर्लभेति । दुर्लभः यः जनः उदयन इत्यर्थः । तस्मिन् अनुरागः आसक्तिः । लज्जा गुर्वी महती । एतस्मात् साक्षाद् भाषणं न भविष्यति, लेखप्रेषणादिना यदेव सम्भवति तदेव भविष्यतीत्यर्थः । आत्मा परस्य वासवदत्तायाः वशः पराधीनः यौगन्धरायणेन वासवदत्ताहस्ते समर्पितत्वात् । अतः पराधीनः जनः स्वेच्छया किमपि कर्तुं न शक्नोति इति भावः । प्रेम अनुरागः विषमम् विपरीतम् । अतएवास्यामवस्थायां किं करणीयमिति आह । मरणम् एकं तु वरं श्रेष्ठं शरणम् आश्रयः । मरणेनैव सर्वथा मे शुभं भविष्य-

1 वरमेक्कं ।

तीति। मवरमिति पाठे न वरं यस्मात् इति अनुत्तममित्यर्थः। अथवा, मरणं वरं शरणं न(नु) किम् इति योजना। सर्वथा मरणमेव श्रेष्ठः आश्रय इत्यर्थः ॥१॥

**Prose.** प्रियसखि, दुर्लभजनानुरागः, गुर्वी लज्जा, परवशः आत्मा, प्रेम विषमं ; एकं मरणं नु वरं शरणं ( अथवा—मरणं वरं शरणं न किम् ? ) ॥१॥

**Beng. Trans.** সাগরিকা—( লজ্জার সহিত—স্বগত ) নিশ্চয়ই প্রিয়সখীর নিকট ধরা পড়িয়াছি। ( সুসঙ্গতার হস্তধারণ করিয়া—প্রকাশ্যে) প্রিয়সখি, আমার লজ্জা বলবতী হইয়া পড়িয়াছে। সুতরাং এইরূপ কর, যাহাতে অপর কেহ এই ব্যাপার জানিতে না পারে।

সুসঙ্গতা—সখি, লজ্জা করিও না। এইরূপ কন্যারত্নের এই রকম বরে অভিলাষ হওয়াই উচিত। তথাপি যাহাতে অপর কেহ এই ব্যাপার জানিতে না পারে সেইরূপ করিব। কিন্তু এই মেধাবিনী সারিকাই এই বিষয়ে (রহস্যভেদে) কারণস্বরূপ হইবে। হয়ত কখনও সে এই আলাপের কথাগুলি গ্রহণ করিয়া কাহারও সম্মুখে বলিতে থাকিবে।

সাগরিকা—এইজন্য আমার সন্তাপ আরও বৃদ্ধিপ্রাপ্ত হইতেছে। ( মদনাবেশ অভিনয় করিলেন )

সুসঙ্গতা—( সাগরিকার হস্ত ধারণ করিয়া ) সখি, আশ্বস্ত হও, আশ্বস্ত হও। আমি এই সরোবর হইতে পদ্মপত্র ও মৃণালগুলি লইয়া শীঘ্র আসিতেছি। ( নিষ্ক্রান্ত হইয়া পুনঃ প্রবেশ করতঃ পদ্মপত্রের দ্বারা শয্যা ও মৃণালের দ্বারা বলয় রচনার অভিনয় করিয়া অবশিষ্ট পদ্মপত্র সাগরিকার বুকে নিক্ষেপ করিল )

সাগরিকা—সখি, এই মৃণাল ও পদ্মপত্রগুলি সরাইয়া লও। এইগুলির কোন প্রয়োজন নাই। অকারণ কেন নিজেকে কষ্ট দিতেছ ?—

দুর্লভজনের প্রতি অনুরাগ, মহতী লজ্জা, নিজের পরবশ্যতা; হে প্রিয়সখি, আমার প্রেম অতি বিষম ; ( এমতাবস্থায় ) এক মরণই শ্রেষ্ঠ আশ্রয় ॥১॥

**Eng. Trans.** Ságariká. ( Aside ) My friend has disdovered my (secret). (Catching hold of Susangatá's hand —aloud ) My friend, great is my nervousness (bashfulness) ; so please do so that nobody else may be acquainted with this affair.

Susangatá. Do not be ashamed, my friend ? Such a jewel of a maiden will surely cherish her desire for such a bride-

groom. Still I shall act in a manner so that none else may come to know of it. But it is more likely that this pratling Sáriká may be the cause for it ; as she, hearing this our conversation, may sometimes repeat it in the presence of somebody.

Ságariká. So my affection still more overpowers me (Represents the state of love-sickness).

Susangatá. (Catching hold of Ságariká's hand) My friend, be consoled. I shall collect some lotus-leaves and lotus-stalks from yonder lake and come back presently. (Exit and brings some lotus leaves and lotus-stalks, forms a bed with the former and makes bangles with the latter and then throws some leaves upon Ságariká's bosom.)

Ságariká. (Enough, enough) my friend, take away these lotus-leaves and stalks ; there is no use of these. Why are you taking trouble for nothing ?—

(My) attachment is towards a person attainable with difficulty ; (my) bashfulness (nervousness) is very great ; my self is under the control of another ; my love is very painful (or unequal). O my dear friend, ( under the circumstances ) death alone is my best refuge. 1 ( Faints )

सुसङ्गता—( सकरुणम् ) पिअसहि ! साअरिए ! समस्सस समस्सस । (क)

( नेपथ्ये कलकलः[1] )

कण्ठे कृत्ता[2]वशेषं कनकमयमधः शृङ्खलादाम कर्षन्
क्रान्त्वा द्वाराणि हेलाचल[3]चरणरणत्किङ्किणीचक्रवालः ।
दत्तातङ्कोऽङ्गनानामनुसृतसरणिः सम्भ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः ॥२॥

(क) प्रियसखि, सागरिके, समाश्वसिहि समाश्वसिहि ।

1 नेपथ्ये । 2 कृत्ता । 3 लीलाचल ।

अपिच—

नष्टं वर्षधरै¹र्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥२॥

सुसङ्गता—( आकर्ण्यायतीऽवलोक्य ससम्भ्रममुत्थाय सागरिकां हस्ते गृहीत्वा ) सहि ! उट्ठेहि उट्ठेहि । एसो क्खु दुट्ठवाणरो इदो ज्जेव्व आअच्छदि । (क)

सागरिका—किं दाणिं करेह्म ? (ख)

सुसङ्गता—एहि । ²इमस्सिं तमालविडवांधकारे पविसिअ एदं अदिवाहेह्म । (ग)

(क) सखि ! उत्तिष्ठ उत्तिष्ठ । एष खलु दुष्टवानरः इत एव आगच्छति ।

(ख) किम् इदानीं कुर्वः ?

(ग) एहि । अस्मिन् तमालविटपान्धकारे प्रविश्य एतमतिवाहयावः ।

कण्ठे इति । कृत्तावशेषं कृत्तः छिन्नः अवशेषः यस्य तत् । कनकमयम् सुवर्णघटितं शृङ्खलादाम शृङ्खला चासौ दाम चेति कण्ठे अधः कर्षन् । हेलया लीलया चलाः चञ्चलाः चरणाः तेषु रणतां ध्वनतां किङ्किणीनां चक्रवालं मण्डलं यस्य सः । अङ्गनानाम् दत्तातङ्कः दत्तः आतङ्कः येन सः । सम्भ्रमात् भयात् अश्वपालैः अनुसृतसरणिः अनुसृतः सरणिः पन्थाः यस्य सः । अयं प्लवङ्गः वानरः नृपतेः मन्दुरायाः प्रभ्रष्टः पलायितः मन्दिरं प्रविशति । स्रग्धरा वृत्तम् ॥२॥ नष्टमिति । वर्षवरैः षण्ढैः मनुष्यगणनाभावात् स्त्रीत्वपुंस्त्वाद्युभयलक्षणविरहितत्वात् तेषां मनुष्यमध्ये गणना न भवति । तैः विद्रुतं पलायितम् त्रपां लज्जाम् अपास्य परित्यज्य । वामनः खर्व्वः त्रासात् वानरभयात् कञ्चुकिकञ्चुकस्य कञ्चुकिनः दीर्घचोलकस्य अन्तः

1 वर्षवरै । 2 ता अलक्खिदं ।

প্রবিশন্তি স্খলনাৎ। পর্য্যন্তাশ্রয়িভিঃ পর্য্যন্তেষু প্রান্তভূমিষু আশ্রয়গ্রহণং কুর্ব্বদ্ভিঃ ভয়াদিত্যর্থঃ। কিরাতৈঃ কিরং পর্য্যন্তভূমিম্ অতন্তি নিরন্তরং গচ্ছন্তি ইতি কির—অত্+কর্ত্তরি অণ্ ইতি কিরাতাঃ তৈঃ। নাম্নঃ সদৃশং যাথার্থ্যং কৃতং প্রান্তভূমিপর্য্যটনশীলাস্তে সাম্প্রতং প্রান্তভূমিমেবাশ্রয়ন্তে ইতি তৈঃ স্বনামস্যানুরূপতঃ যাথার্থ্যং সম্পাদিতম্। আত্মপাতাশঙ্কিনঃ যথা তে বানরেণ দৃষ্টাঃ ন স্যুরিতি। কুব্জাঃ নীচতয়ৈব অধঃ স্থিত্বা এব শনকৈঃ মন্দং যান্তি। শার্দ্দূলবিক্রীড়িতং বৃত্তম্। স্বভাবোক্তিশ্চালঙ্কারঃ॥ ২॥ এতম্ বানরম্ অভিবাহয়াবঃ যাপয়াবঃ।

**Prose.** কণ্ঠে কৃত্তাবশেষং কনকময়ং শৃঙ্খলাদাম অধঃ কর্ষন্ হেলাচলচরণরণৎকিঙ্কিণীচক্রবালঃ অশ্বপালৈঃ সম্ভ্রমাৎ অনুসৃতসরণিঃ অঙ্গনানাং দত্তাতঙ্কঃ অয়ং প্লবঙ্গঃ নৃপতেঃ মন্দুরায়াঃ প্রভ্রষ্টঃ (সন্) দ্বারাণি ক্রান্ত্বা মন্দিরং প্রবিশতি ॥২॥

মনুষ্যগণনাভাবাৎ ত্রপাম্ অপাস্য বর্ষবরৈঃ নষ্টম্। অয়ং বামনঃ ত্রাসাৎ কঞ্চুকিকঞ্চুকস্য অন্তঃ বিশতি। পর্য্যন্তাশ্রয়িভিঃ কিরাতৈঃ নিজস্য নাম্নঃ সদৃশং কৃতম্। আত্মপাতাশঙ্কিনঃ কুব্জাঃ নীচতয়া এব শনকৈঃ যান্তি ॥২॥

**Beng. Trans.** সুসঙ্গতা—( সভয়ভাবে ) প্রিয়সখি, আশ্বস্ত হও, আশ্বস্ত হও।

( নেপথ্যে কোলাহল )

কণ্ঠস্থিত ছিন্নাবশিষ্ট সুবর্ণনির্ম্মিত শৃঙ্খলাদাম নীচের দিকে আকর্ষণ করিতে করিতে স্ত্রীলোকদিগের ভয় উৎপাদন করতঃ এই বানর নৃপতির অশ্বশালা হইতে নির্গত হইয়া সমস্ত দ্বার অতিক্রমপূর্ব্বক প্রাসাদে প্রবেশ করিতেছে। অশ্বপালগণ সসম্ভ্রমে তাহার অনুসরণ করিতেছে এবং সেও অবলীলাক্রমে চলিয়া যাওয়ায় তাহার চরণস্থিত চঞ্চল নূপুরমণ্ডল রণৎকার শব্দ করিতেছে।২।

মনুষ্যমধ্যে গণ্য নহে বলিয়া ক্লীবগণ লজ্জাপরিহারপূর্ব্বক পলায়ন করিতেছে। বামন কঞ্চুকিগণের (লম্বমান) কঞ্চুকমধ্যে ভয়ে প্রবেশ করিতেছে। প্রাসাদের প্রান্তভাগে আশ্রয় গ্রহণ করিয়া কিরাতগণ নিজেদের নামের সার্থকতা রক্ষা করিয়াছে; এবং পাছে তাহাদিগকে দেখিতে পায় এই আশঙ্কায় কুব্জগণ আরও নীচের দিকে দেহ অবনমিত করিয় প্রস্থান করিতেছে।৩।

সুসঙ্গতা—( শুনিয়া সম্মুখদিকে লক্ষ্য করিয়া শশব্যস্তে গাত্রোত্থানপূর্ব্বক সাগরিকাকে হস্তে লইয়া ) সখি, উঠ উঠ। এই দুষ্ট বানর এই দিকেই আসিতেছে।

সাগরিকা—এখন কি করিব ?

সুসঙ্গতা—এস, এই তমালবৃক্ষের অন্ধকারে প্রবেশ করিয়া ইহাকে অতিক্রম করি।

**Eng. Trans.** Susangatá. (Piteously) My friend, be consoled, be consoled.

( A noise behind the scenes)

This monkey has escaped from the stable,carrying around its neck a portion of the broken golden chain and passing through many doors, with a circle of anklets, tinkling at the free sportive motion of its feet, is entering into the palace being followed by the horse-keepers in hot haste and striking terror into the hearts of women ? 2.

Again, the eunuchs, not counted as men, lost to shame, flee (from the path of the monkey) and the dwarf takes shelter within the gown of the Chamberlain out of fear. The Kirátas who live in the border-lands (i. e., guard the surrounding walls of the harem ) are true to their designation and the hump-backed persons move very slowly bowing themselves lowly as if through fear of being discovered. 3.

Susangatá. (Hearing, she looks onward and having left the seat in hot haste, catches hold of Ságariká in her hand) Up, up, my friend. This wicked monkey is coming this way.

Ságariká. What shall we do now ?

Susangatá. Come, let us hide in the darkness of this Tamála tree and pass it off.

( परिक्रम्योभे सभयं पश्यन्त्यावेकान्ते पर्य्यवस्थिते[1])

सागरिका—कहं सुसंगदे तुए चित्तफलओ उज्झिदो ? कदावि कोवि तं पेक्खदि। (क)

(क) कथं सुसङ्गते त्वया चित्रफलकः उज्झितः ? कदापि कोऽपि तं प्रेक्षते।

1 तथा कृत्वा उभे सभयं पश्यन्त्यौ स्थिते

सुसङ्गता—अइ सुत्थिदे ! किं अज्जवि चित्तफलएण करिस्ससि ? एसोवि दहिभत्तलम्पडो एदं[1] पञ्जरं उग्घाडिअ दुट्ठवाणरो अदिक्कंतो[2]। [3]एसा क्खु मेहाविणी उड्डीणा अण्णदो गच्छदि । ता एहि । लहुं अणुसरेह्म । इमस्स आलावस्स गहिदक्खरा कस्सवि पुरदो मंतइस्सदि । (क)

सागरिका—सहि एव्वं करेह्म । (ख)

( इति परिक्रामतः )

( नेपथ्ये )

ही ही ! अच्छरिअं अच्छरिअं ! (ग)

सागरिका—( विलोक्य ) सुसंगदे ! जाणीअदि कहं पुणो दुट्ठ-वाणरो ज्जेव्व आअच्छदि ! (घ)

सुसङ्गता—( दृष्ट्वा विहस्य ) अइ काअरे ! मा भेहि ! भट्टिणो पस्सवत्ती[4] क्खु एसो अज्जवसंतओ । (ङ)

( ततः प्रविशति वसन्तकः )

वसन्तकः—ही ही भो ! अच्छरिअं अच्छरिअं ! साहु रे सिरिखंडदास धम्मिअ, साहु ! (च)

(क) अयि सुस्थिते ! किम् अद्यापि चित्रफलकेण करिष्यसि ? एषोऽपि दधिभक्त-लम्पटः एतत् पञ्जरम् उद्घाट्य दुष्टवानरोऽतिक्रान्तः। एषा खलु मेधाविनी उड्डीना अन्यतः गच्छति। तदेहि लघु अनुसराव:। अस्य आलापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यते।

(ख) सखि, एवं कुर्व्वः।

(ग) ही ही ! आश्चर्य्यम् आश्चर्य्यम् ! (घ) सुसङ्गते, ज्ञायते कथं पुनः दुष्टवानरः एव आगच्छति। (ङ) अयि कातरे, न बिभीहि, भर्त्तुः पार्श्ववर्त्ती खलु एषः आर्य्य-वसन्तकः। (च) ही ही भोः ! आश्चर्य्यम् आश्चर्य्यम् ! साधु रे श्रीखण्डदास धार्म्मिक, साधु !

1 सारिआपञ्जरं । 2 अपक्कंतो । 3 मेहाविणी । 4 परिवासवत्ती ।

सागरिका—(सस्पृहमवलोकयति) सहि सुसंगदे ! दंसणीओ क्खु अअं जणो ! (क)

(क) सखि सुसङ्गते, दर्शनीयः खलु अयं जनः।

सुस्थिते निरुद्वेगे। दधिभक्तलम्पटः दधिमिश्रितान्नभोजने सुचतुरः वानरः इति भावः। अतिक्रान्तः पलायितः। गृहीताक्षरा लब्धवृत्तान्ता मन्त्रयिष्यते कथयिष्यति। पार्श्व-वर्त्ती समीपस्थः। दर্शनीयः अस्य विदूषकस्य मूढत्वेन आकृत्या च।

**Beng. Trans.** ( উভয়ে পরিক্রমণ করিয়া সভয়ে দেখিতে দেখিতে একপার্শ্বে উপবেশন করিল )

সাগরিকা—সুসঙ্গতে, তুমি কেন চিত্রফলকটী ছাড়িয়া আসিলে? কেহ কথনও দেখিতে পারে।

সুসঙ্গতা—অয়ি সুস্থিতে ! এখন চিত্রফলক লইয়া কি করিবে ? এই সেই দধিমিশ্রিত অন্নভোজনে পটু দুষ্ট বানর—এই ( সারিকার ) পঞ্জরটি উদ্‌ঘাটিত করিয়া পলায়ন করিয়াছে। এই মেধাবিনীও ( সারিকা ) উড়িয়া অন্যত্র চলিয়া গেল। এখন এস, শীঘ্র ইহার অনুসরণ করি। এই কথোপকথনের অক্ষরগুলি মুখস্থ করিয়া সে হয়ত কাহারও সম্মুখে প্রকাশ করিয়া ফেলিবে।

সাগরিকা—সখি, তাহাই করি।

( পরিক্রমণ করিল )

( নেপথ্যে )

বাঃ বাঃ ! কি আশ্চর্য্য ! কি আশ্চর্য্য !

সাগরিকা—( দেখিয়া ) সুসঙ্গতে, মনে হয় যেন সেই দুষ্ট বানরটা এই দিকে আবার আসিতেছে।

সুসঙ্গতা—( দেখিয়া—সহাস্যে ) অয়ি ভীরু, ভয় নাই, এ মহারাজের পার্শ্বচর আর্য্য বসন্তক।

( বসন্তক প্রবেশ করিল )

বসন্তক—বাঃ বাঃ ! কি আশ্চর্য্য ! কি আশ্চর্য্য ! বাহবা, ধার্ম্মিক শ্রীখণ্ডদাস, বাহবা !

সাগরিকা—( সস্পৃহভাবে দেখিয়া ) সখি সুসঙ্গতে, এই লোকটী দেখিবার মত বটে !

(Both walk round and looking with fear, sit down on one side )

**Eng. Trans.** Ságariká. Oh Susangatá, why have you left the picture-board? Somebody may by chance come across it.

Susangatá. Oh thou safely situated now! What would you do now with the picture-board? This wicked monkey, fond of rice mixed with curd, has broken open the cage and has escaped. This clever bird (Medhávini—Sáriká) too is now on her wings and is going elsewhere. So let us follow her in a hurry; or she will repeat in the presence of somebody the conversation which she has learnt by rote.

Ságariká. Friend, let us do so.

(Both walk round)

(Behind) Hullow! what wonder! what wonder!

Ságariká. (Looking) Oh Susangatá, I think that wicked monkey is coming this way again.

Susangatá—(Looking—with a smile) Oh timid girl, do not fear. It is our worthy Vasantaka who is the companion of our lord, the King.

(Enter Vasantaka)

Vasantaka. Hullow! Very strange indeed! Bravo, O pious Shrikhandadása, well done!

Ságariká. (Looks wistfully) Friend Susangatá, this person is really worth seeing!

सुसङ्गता—सहि ! सुत्थिदे ! किं एदिणा दिट्ठेण ? दूरीभूदा[1]

---

1 दूरे भोदि ।

क्खु सारिआ। ता एहि। अनुसरेह्म। (क)
( इति[1] निष्क्रान्ते[2] )

वसन्तक—[3]साहु रे सिरिखण्डदास धम्मिअ, साहु!—जेण दिसमेत्तेण तेण ज्जेव्व दोहदेण ईदिसी णोमालिआ संवुत्ता, जेण णिरन्तरुब्भिण्णकुसुमगुच्छच्छादिअविडवो[4] उवहसन्तो विअ लक्खीअदि देवीपरिग्गहिदं माहवीलदं। ता जाव गदुअ पिअवअस्सस्स णिवेदेमि[5]। ( परिक्रम्यावलोक्य च ) एसो क्खु पिअवअस्सो तस्स दोहअस्स लद्धपच्चअदाए परोक्खं वि तं णोमालिअं पच्चक्खं विअ कुसुमिदं पेक्खन्तो हरिसुप्फुल्ललोअणो इदो ज्जेव्व आअच्छदि। ता जाव णं उवसप्पामि। ( इति राजानं प्रति निर्गतः ) (ख)
( ततः प्रविशति यथानिर्दिष्टो राजा )

राजा—( सहर्षम् )

उद्दामोत्कलिकां विपाण्डुरुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरतै[6]रातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम् ॥४॥

(क) सखि, सुसंगते! किम् एतेन दृष्टेन? दूरीभूता खलु सारिका। तदेहि। अनुसरावः।

(ख) साधु रे श्रीखण्डदास धार्मिक, साधु!—येन दर्शनमात्रेण तेन एव दोहदेन ईदृशी नवमालिका संवृत्ता, येन निरन्तरोद्भिन्नकुसुमगुच्छाच्छादितविटपा उपहसन्ती इव लक्ष्यते देवीपरिगृहीतां माधवीलताम्। तद् तावत् गत्वा प्रियवयस्यस्य निवेदयामि। एषः खलु प्रियवयस्यः तस्य दोहदस्य लब्धप्रत्ययतया परोक्षामपि तां नवमालिकां प्रत्यक्षामिव कुसुमितां प्रेक्षमाणः हर्षोत्फुल्ललोचनः इत एवागच्छति। तद् यावदेनम् उपसर्पामि।

1 उभे। 2 ततः प्रविशति प्रहृष्टो विदूषकः। 3 ही ही भो! अच्छरिअं अच्छरिअं! साहु रे etc. 4 गुच्छसोहिअ। 5 वड्ढावेमि। 6 रविरतं।

वसन्तकः—( उपसृत्य ) जअदु जअदु पिअवअस्सो ! भो वअस्स ! दिट्ठिआ वड्ढसि ( जेण दिण्णमेत्तेण ज्जेव्व तेण दोहलेण इत्यादि पुनः पठति ) (क)

(क) जयति जयति प्रियवयस्यः ! भो वयस्य, दिष्ट्या वर्द्धसे (येन दत्तमात्रेण एव तेन दोहदेन ईदृशी नवमालिका संवृत्ता, येन निरन्तरोद्भिन्नकुसुमगुच्छाच्छादित-विटपा उपहसन्ती इव लक्ष्यते देवीपरिगृहीतां माधवीलताम् । )

निर् नास्ति अन्तरम् अवकाशः यस्मिन् तत् निरन्तरं सन्ततं यथा तथा उद्भिन्नानि उद्गतानि कुसुमानि तेषां गुच्छानि तैः आच्छादिताः विटपाः शाखाः यस्याः सा नवमालिका राज्ञः परिगृहीता । देवीपरिगृहीतां माधवीलतामुपहसन्ती स्वकुसुमसम्पत्त्या इत्यर्थः । लब्धप्रत्ययतया लब्धविश्वासतया । उद्दामेति । उद्दामा बन्धरहिताः अतिप्रभूता च उत्कलिकाः उत्कण्ठाः कोरकाश्च यस्याः ताम् । विपाण्डु रुचं विपाण्डुरा विशेषेण पाण्डुवर्णा प्रियविरहेण पुष्पोद्गमेन च शुभ्रवर्णत्वात् रुक् कान्तिः शोभा च यस्याः ताम् । प्रारब्धजृम्भां प्रारब्धा जृम्भा जृम्भनं विकासश्च यस्याः ताम् 'जृम्भा विकास-जृम्भणयो-स्त्रिषु' इति मेदिनी । अविरतैः निरवच्छिन्नैः श्वसनोद्गमैः श्वासानाम् उद्गमैः वायूनामुद्गमैश्च "श्वसनः स्पर्शनो वायुः" इत्यमरः । आत्मनः आयासं खेदं श्रमजन्यं श्रमञ्च आतन्वतीं कुर्व्वतीं समदनां मदनवशगां नारीमिव अद्य इमाम् उद्यानलताम् नवमालिकाम् इत्यर्थः । पश्यन् अद्य देव्याः वासवदत्तायाः मुखं कोपविपाटलद्युति कोपेन क्रोधेन विपाटला विशेषेण पाटला श्वेतरक्ता, "श्वेतरक्तस्तु पाटलः" इत्यमरः, द्युतिः कान्तिः यस्य तत् मुखम् ध्रुवं निश्चितं करिष्यामि । यथा काचित् नारी प्रियेण विशेषेणानुगृहीतामन्यां नारीं सपत्नीं विलोक्य ईर्ष्यया स्वमुखमारक्तिमाभं करोति तथा कुसुमसम्पन्नां राज्ञा अनु-गृहीतां नवमालिकां विलोक्य वासवदत्ताया अपि मुखं रक्ताभं भविष्यति कोपेनेत्यर्थः । अत्र उक्तिभङ्ग्या सागरिकामुपक्षिपतीत्यर्थः ॥४॥ पताकास्थानकमेतत् ।

**Prose order**. उद्दामोत्कलिकां विपाण्डुरुचं अधात् प्रारब्धजृम्भां अविरतैः श्वसनोद्गमैः आत्मनः आयासम् आतन्वतीम् अन्यां समदनां नारीम् इव इमाम् उद्यानलतां पश्यन् अहम् अद्य ध्रुवं देव्याः मुखं कोपविपाटलद्युति करिष्यामि ॥४॥

**Beng. Trans** হে নিরুদ্বেগে! ইহাকে দেখিয়া লাভ কি? সারিকা দূরে চলিয়া গিয়াছে। তা এস, অনুসরণ করি।

(উভয়ে নিষ্ক্রান্ত)

বসন্তক—বাহবা, ধার্ম্মিক শ্রীখণ্ডদাস, বাহবা! তোমার দোহদ (অর্থাৎ সাধ) দিবামাত্রই নবমালিকা এইরূপ হইয়া গেল; সেইজন্য নিরন্তর সমুদ্গত কুসুমরাজি দ্বারা ইহার শাখাসমূহ আচ্ছাদিত (অথবা শোভিত) হওয়ায় দেখা যাইতেছে যেন সে (নবমালিকা) দেবীর পরিগৃহীতা মাধবীলতাকে উপহাস করিতেছে। এখন গিয়া প্রিয়বয়স্যকে এই কথা নিবেদন করি। (পরিক্রমণপূর্ব্বক অবলোকন করিয়া) এই যে প্রিয়বয়স্য সেই দোহদের উপর দৃঢ় বিশ্বাসহেতু অপ্রত্যক্ষ হইলেও নবমল্লিকাকে কুসুমিত হইতে যেন প্রত্যক্ষ করিয়াই হর্ষোৎফুল্লনেত্রে এইদিকে আসিতেছেন। এখন উঁহার নিকট অগ্রসর হই। (রাজার দিকে অগ্রসর হইল)

(যথানির্দ্দিষ্ট রাজার প্রবেশ)

রাজা—(সানন্দে) যেরূপ কোনও নারী বিষম উৎকণ্ঠায় আকুল হইয়া পাণ্ডুবর্ণ ধারণ করে, ক্ষণে ক্ষণে তাহার জৃম্ভা প্রকাশ পায়, এবং অবিরত দীর্ঘনিশ্বাসের দ্বারা নিজের আয়াস (মদনপীড়া) প্রকাশ করে—সেইরূপ এই উদ্যানলতা সমুদ্গত কলিকা-(কোরক)-সমূহের বিকাশে শ্বেতবর্ণ ধারণ করিয়াছে—এবং নিরন্তর বায়ুসঞ্চালনের দ্বারা আন্দোলনের ফলে ইতস্ততঃ ভ্রমণ জন্য নিজের খেদ উৎপাদন করিতেছে। — মদনবিহ্বলা পরকীয়া নারীর ন্যায় এই (লতাকে) দর্শনপূর্ব্বক আমি অদ্য নিশ্চয়ই মহিষীর মুখের (কান্তি) কোপে পাটলবর্ণ (গোলাপী) করিয়া তুলিব ॥৪॥

বসন্তক—(সহর্ষে অগ্রসর হইয়া) প্রিয়বয়স্যের জয় হউক! হে বয়স্য, ভাগ্যক্রমে আপনি আজ অভ্যুদয় লাভ করিয়াছেন। (এই বলিয়া পূর্ব্বোক্ত শ্লেণ দিন্নমেত্তেণ ইত্যাদি আবৃত্তি করিতে লাগিলেন)

**Eng. Trans.** Sus. O you free from anxiety! What is the use of looking at him? The Sáriká has gone to a great distance; so come, let us follow her.

(Both exeunt)

Vasantaka. Well done, oh pious Shrikhandadása! well done!—by whose wish yielding drug, as soon as applied, the

Jasmine creeper has been covered with countless buds in its branches, and looks as if smiling disdainfully upon the Queen's favourite Mádhavi creeper. So I shall go and tell my friend ( what has happened. ) (Walking round and seeing) Yonder my dear friend comes in this direction, looking quite confident about the desire-fulfilling horticultural drug and with his eyes glowing with joy, sees directly before him as it were, the Navamáliká (creeper) blossoming, though actually it lies beyond his sight. Therefore, let me approach him. (So he steps forward to the King)

( Enter the King as described )

King. (Rejoicing) Today surely I shall cause the face of the Queen assume a purple hue due to anger by looking towards this creeper of the garden resembling another love-sick lady—the creeper that with a luxuriant growth of buds (or with excessive anxieties) assumes a whitish colour (or develops a pallid complexion), that is full of blooming flowers (or is commencing to yawn) and that displays its own exertion (or affection, agitation) due to incessant blowing of the wind (or heavy sighs). 4.

Vasantaka. (Approaching suddenly) Victory to my dear friend ! O friend, you are fortunately attended with prosperity ! (He repeats the portion जेण दिष्टमित्तेण etc. )

राजा—वयस्य कः सन्देहः ! अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः ! पश्य—

कण्ठे श्रीपुरुषोत्तमस्य समरे दृष्ट्वा मणिं शत्रुभि-
र्नष्टं मन्त्रवरै[1]र्वसन्ति वसुधामूले भुजङ्गा हताः ।
पूर्वं लक्ष्मणवीरवानरभटा ये मेघनादाहताः
पीत्वा तेऽपि महौषधेषु गनिधेर्गन्धं पुनर्जीविताः ॥५॥

1 मन्त्रबलात् ।

तदादेशय मार्गं, येन वयमद्य[1] तदवलोकनेन चक्षुषः फलमनुभवामः ।

वसन्तकः—( साटोपम् ) एदु एदु भवं । (क)

राजा—गच्छाग्रतः ।

( उभौ सगर्वं परिक्रामतः )

वसन्तकः—( आकर्ण्य सभयं निवृत्य [2]राजानं हस्ते गृहीत्वा ससम्भ्रमम् ) भो वअस्स ! एहि पलाअम्ह । (ख)

राजा—किमर्थम् ?

वसन्तकः—भो ! एदस्सिं बउलपादवे कोवि भूदो पडिवसदि । (ग)

राजा—धिङ् मूर्ख ! विस्रब्धं गम्यताम् । कुत ईदृशानामत्र प्रभावः[3] ?

वसन्तकः—[4]फुड्क्खरं ज्जेव्व मंतेदि । जइ मम वअणं ण पत्तिआअसि, ता अग्गदो भविअ सअं ज्जेव्व आअण्णेहि । (घ)

राजा—( तथा कृत्वा श्रुत्वा च )

स्पष्टाक्षरमिदं यस्मान्मधुरं[5] स्त्रीस्वभावतः ।
अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति सारिका ॥६॥

(क) एतु एतु भवान् । (ख) भो वयस्य, एहि पलायावहे ।

(ग) भोः ! एतस्मिन् वकुलपादपे कोऽपि भूतः प्रतिवसति ।

(घ) स्फुटाक्षरमेव मन्त्रयते । यदि मम वचनं न प्रत्याययसि (प्रत्येषि), तदग्रतो भूत्वा स्वयमेवाकर्णय ।

1 वयमपि । 2 परावृत्य । 3 सम्भवः । 4 भो एसो क्खु.... । 5 तावन्मधुरं ।

( ऊर्ध्वं निरूप्य निपुणमवलोक्य [1]) कथं सारिका[2] !

वसन्तक:—( विचार्य्य[3] ) कधं सच्चं ज्जेव्व सारिआ ? (क)

राजा—( सस्मितम् ) वयस्य ! एवम् ।

वसन्तक:—भो वअस्स ! तुमं भआलुओ[4], जेण सारिअं भूदेत्ति मंतेसि । (ख)

राजा—धिङ् मूर्ख ! यदात्मना कृतं तन्मयि सम्भावयसि !

वसन्तक:—भो ! जइ एव्वं मा क्खु मं णिवारेसि (दण्डकाष्ठमुद्यम्य) आ दासीए धीए ! तुमं जानासि सच्चं ज्जेव्व वसंतओ भाअदित्ति । ता चिट्ठ चिट्ठ दाव मुहुत्तं जाव इमिणा पिसुणजण-हिअअकुडिलेण दण्डकट्ठेण परिपक्कं विअ कइत्थफलं इमादो वउलपाअवादो आहणिअ भूमिए पाडइस्सं । (ग)

राजा—(निवारयन्) मूर्ख ! किमप्येषा रमणीयं व्याहरति । तत् किमेनां त्रासयसि । शृणुवस्तावत् ।

( उभौ आकर्णयत: )

(क) कथं सत्यमेव सारिका !

(ख) भो: वयस्य ! त्वं भयालुक:, येन सारिकां भूत इति मन्त्रयसे ।

(ग) भो: यद्येवं, मा खलु मां निवारय । आ: दास्या: पुत्रि ! त्वं जानासि सत्यमेव वसन्तको बिभेतीति । तत्तिष्ठ तिष्ठ तावत् मुहूर्त्तं यावदनेन पिशुनजनहृदयकुटिलेन दण्डकाष्ठेन परिपक्वम् इव कपित्थफलं अस्मात् वकुलपादपात् आहत्य भूमौ पातयिष्यामि ।

अचिन्त्य: चिन्ताया अगोचर: । कण्ठे इति । समरे देवासुरयुद्धे पुरुषोत्तमस्य विष्णो: चरमतीतत्वाद अव्यक्तत्वाच्च, कण्ठे गलदेशे विराजमानं मणिं कौस्तुभाख्यं समुद्रमन्थने प्राप्तं दृष्ट्वा शत्रुभि: दैत्यै: नष्टं विनष्टम् । मन्त्रवरै: मन्त्रश्रेष्ठै: वसुधामूले पाताले भुजङ्गा: हता:

1 स्मितं कृत्वा । 2 सारिकैवेयम् । 3 ऊर्ध्वं निरूप्य । 4 पुस्तकान्तरे नास्ति ।

हतबला: इत्यर्थ:। हत इत्यनेन निहत इत्यर्थे गृह्यीते तेषां पातालगमनस्यासम्भवत्वात्। पूर्व्वं पुरा ये लक्ष्मणवीरवानरभटा: लक्ष्मणश्च रामानुज: वीरवानरभटाश्च वानरसैनिका: मेघनादाहता: मेघनादेन रावणपुत्रेण आहता: अभवन् इत्यर्थ:। तेऽपि गुणनिधे: अतुलगुणसम्पन्नस्य महौषधे: विशल्यकरण्यादे: हनूमता आनीतस्य इत्यर्थ:, गन्धं पीत्वा आघ्राय पुनर्जीविता: अभवन्। एवं मणिमन्त्रौषधीनामतुल्य: प्रभाव: ॥५॥ साटोपम् सगर्व्वम्। ससम्भ्रमम् सभयम् सत्वरं च। इहस्थानां भूतादीनामित्यर्थ:। स्पष्टाक्षरमिति। स्पष्टाक्षरम् स्फुटाक्षरं इदं भाषितम् इत्यर्थ:। मधुरं श्रवणसुखम् स्त्रीस्वभावत: स्त्रीत्वात् कण्ठमाधुर्य्यमित्यर्थ:। अल्पाङ्गत्वात् क्षुद्रदेहत्वात् अनिर्ह्रादि अनुच्चै: आकर्ण्यमानम् यस्मात् तस्मात् सा सारिका इति मन्ये तर्कयामि ॥६॥ पिशुनजनहृदयकुटिलेन पिशुना: दुर्ज्जना: खला: तेषां हृदयमिव कुटिलं दण्डकाष्ठमित्यर्थ:।

**Prose order.** समरे श्रीपुरुषोत्तमस्य कण्ठे मणिं दृष्ट्वा अरिभि: नष्टम्। मन्त्रवरै: भुजङ्गा: हता: वसुधामूले वसन्ति। पूर्व्वं ये लक्ष्मणवीरवानरभटा: मेघनादाहता: तेऽपि गुणनिधे: महौषधे: गन्धं पीत्वा पुन: जीविता: ( अभवन् ) ॥५॥

यस्मात् इदम् स्पष्टाक्षरं स्त्रीस्वभावत: मधुरम् अल्पाङ्गत्वात् अनिर्ह्रादि, ( तस्मात् ) ( अहं ) मन्ये सा सारिका वदति ( इति ) ॥६॥

**Beng. Trans.** রাজা—বয়স্য, তাহাতে আর সন্দেহ কি? মণি, মন্ত্র ও ঔষধের প্রভাব চিন্তারও অগোচর; দেখ—

পুরুষোত্তম বিষ্ণুর কণ্ঠে মণি দেখিয়া যুদ্ধে শত্রুগণ বিনাশপ্রাপ্ত হইয়াছিল। শ্রেষ্ঠ মন্ত্রসমূহের দ্বারা ভুজঙ্গগণ হতবীর্য্য হইয়া পাতালে বাস করিতেছে। পুরাকালে লক্ষ্মণ ও অন্যান্য যে সমস্ত বানরসৈনিক মেঘনাদকর্ত্তৃক আহত হইয়াছিল তাহারাও গুণের আকর মহৌষধির গন্ধ আঘ্রাণ করিয়া পুনর্ব্বার জীবিত হইল ।৫।

অতএব, পথ দেখাও, যাহাতে আমরা আজ উহা দর্শন করিয়া চক্ষুর ফল ( সাফল্য ) অনুভব করি।

বসন্তক—( সগর্ব্বে ) আসুন আসুন আপনি।

রাজা—অগ্রসর হও। ( উভয়ে সগর্ব্বে পরিক্রমণ করিতে লাগিলেন )

বসন্তক—( শুনিয়া সভয়ে রাজার দিকে ফিরিল ও রাজার হস্ত ধারণ করিয়া সসম্ভ্রমে ) হে বয়স্য, আসুন, পলায়ন করি।

রাজা—কি জন্ত ?

বিদূষক—এই বকুলবৃক্ষে একটা ভূত বাস করে।

রাজা—ধিক্ মূর্খ, নির্ভয়ে চল। এখানে এই সকলের প্রভাব কিরূপে সম্ভবপর হয় ?

বিদূষক—এঁযে খুব স্পষ্টভাবে কথা বলিতেছে। এখন যদি আপনি আমার কথা বিশ্বাস না করেন তাহা হইলে অগ্রসর হইয়া নিজেই শ্রবণ করুন।

রাজা—( তাহাই করিয়া ও শুনিয়া ) এই ( বাক্য ) স্পষ্টাক্ষর, স্ত্রীস্বভাবহেতু মধুর, ও ক্ষুদ্রাকার বলিয়া অগম্ভীর ( মৃদু ) ; ( এই জন্ত উহাকে ) আমার সারিকা বলিয়া মনে হইতেছে।৬।

( ঊর্দ্ধদিকে লক্ষ্য করতঃ নিপুণভাবে অবলোকন করিয়া ) হাঁ, সারিকাই বটে।

বসন্তক—( বিবেচনা করিয়া ) সত্যই কি সারিকা বটে ?

রাজা—( হাসিয়া ) হাঁ, বয়স্ত !

বসন্তক—হে বয়স্ত, তুমি বড় ভীতু ; সেইজন্ত সারিকাকে ভূত বলিয়া বর্ণনা করিতেছ।

রাজা—ধিক্ মূর্খ, যাহা তুমি নিজে মনে করিয়াছ, তাহা আমার উপর আরোপ করিতেছ !

বসন্তক—বয়স্য, যদি তাহাই হয়, তাহা হইলে আমাকে বারণ করিবেন না ( সক্রোধে দণ্ডকাষ্ঠ উত্তোলন করিয়া ) অরে দাসীর পুত্রি ! তুমি মনে করিয়াছ যে বসন্তক সত্যই ভয় পাইয়াছে। এখন মুহূর্ত্ত মাত্র অপেক্ষা কর, তাহা হইলে দুর্জ্জন ব্যক্তির হৃদয়ের তুল্য কুটিল এই দণ্ডকাষ্ঠের দ্বারা পক্ক কপিত্থ ফলের ন্যায় তোমাকে এই বকুলবৃক্ষ হইতে পাতিত করিব।

রাজা—(নিবারণ করিয়া) মূর্খ, এই সারিকা কোনরূপ সুন্দর কথা বলিতেছে, তবে কেন তাহাকে ভয় দেখাইতেছ ? এখন শোনা যাক্। ( উভয়ে শ্রবণ করিতে লাগিলেন )

**Eng. Trans.** King—Is there any doubt about it, my friend ? For inconceivable is the influence ( efficacy ) of jewels, charms and herbs. Just see—

At the sight of the gem suspended from the neck of the blessed Lord Purushottama, the enemies were annihilated in the battle. Snakes, being humbled down by the force of wonderful incantations, are residing in the nether region ; and in

ancient times Lakshmana and the heroic monkey-soldiers who were wounded by Meghanáda, were restored to their lives by smelling the celebrated drug of good qualities. 5.

So, lead the way, so that these eyes may, this day, obtain the fruit of their formation (lit, we may reap the fruits of possessing our eyes) by having a sight of it.

Vasantaka. ( With pride) Come this way, Sire !

King. Proceed in front.

(Both walk round with pride)

Vasantaka. (Hears with alarm and turning back catches hold of the hands of the King in haste) My friend, let us run away.

King. Why ?

Vasantaka. There is a goblin on yonder Vakula tree.

King—Away, simpleton ! go on in full confidence. How should any such being have power in this place ?

Vasantaka. It speaks quite distinctly if you disbelieve me, then advance and listen yourself.

King. (Does so and hears) As the ( voice ) is distinct and sweet on account of its feminine characteristic and not deep ( resounding ) owing to ( its ) being of a small volume ( lit. size ), I think she is a female parrot (Sáriká.) 6.

(Looking up and observing minutely) Oh, it is a Sáriká.

Vasantaka. (Thinking) How now, is it truly a female parrot ( Sáriká ) ?

King. (Smiling) yes, my friend !

Vasantaka, My friend, you have got frighte ned, so you fancy a starling to be a goblin.

King. Out on you, blockhead ! you are accusing (lit. imposing on) me of what you yourself have done.

Vasantaka. Well, if it be so, then please do not interfere with me (Holds up the staff in anger) you impertinent bird

(lit. the daughter of a slave-girl or harlot ) you think that Vasantaka has been really very much frightened. Then stop a moment and with this staff, crooked as the mind of the wicked, I will bring you down from the Vakula tree like a ripe Kapittha fruit (wood-apple).

King.—(Interfering) You simpleton ! How prettily she prattles something. So why are you frigh tening her ? Let us hear. (Both hear)

वसन्तकः—(आकर्ण्य) एव्वं भणादि—इमस्स बह्मणस्स भोजणं दिज्जेति[1] । (क)

राजा—सर्व्वमप्यौदरिकस्याभ्यवहार एव पर्य्यवस्यति । तत् सत्यं वद, किमालपति सारिका ?

वसन्तकः—(आकर्ण्य) भो वअस्स ! सुदं तुए जं एदाए मंतिदं । एसा भणादि—सहि ! को एसो तुए आलिहिदो ? पउत्तमदनमहुस्सवे भअवं अणंगोत्ति । पुणोवि भणादि—सहि ! कीस तुए अहं एत्थ आलिहिदा ? सहि ! किं अआरणे कुप्पसि ? जादिसो तुए कामदेओ आलिहिदो तादिसो मए रइ आलिहिदेत्ति । ता असम्भासंभाविणि ! किं तुह एदिणा आलविदेण ? कहेहि सव्वं वुत्तंतं । भो वअस्स ! किं णेदं ? (ख)

राजा—वयस्य ! एवं तर्कयामि कयापि हृदयवल्लभोऽनुरागादभिलिख्य कामदेवव्यपदेशेन सखीपुरतोऽपह्नुतः, तत्

(क) एवं भणति—अस्य ब्राह्मणस्य भोजनं दीयतामिति ।

(ख) भो वयस्य ! श्रुतं त्वया यत् एतया मन्त्रितम् । एषा भणति—सखि, कः एषः

1 न दृश्यते पुस्तकान्तरेषु ।

मध्यापि प्रत्यभिज्ञाय वैदग्ध्यादसावपि तत्रालिख्य रतिव्यपदेशेन दर्शितेति ।

विदूषकः—(क्षौटिकां दत्त्वा) भो वअस्स ! जुज्जदि क्खु एदं । (क)

राजा—भो वयस्य ! तूष्णीं भव । पुनरपि व्याहरति । तच्छृणुवस्तावत् ।

( उभावपि शृणुतः )

विदूषकः—भो पुणोवि एसा एव्वं भणादि—सहि ! मा लज्ज । ईदिसस्स कस्सारअणस्स अवस्सं ज्जेव्व ईदिसे वरे अहिलासेण होदव्वं । (ख)

राजा—अस्ति काचिद् युक्तिः ।

विदूषकः—भो वअस्स ! मा पंडिअगव्वं उव्वह । अहं दे एदाए मुहादो सुणिअ सव्वं वक्खाणइस्सं । जा एसा आलिहिदा सा क्खु कुस्सा दंसणीआ । (ग)

राजा—यद्येवमवहितौ शृणुवस्तावत् । अस्त्यत्रावकाशो नः कुतूहलस्य ।

त्वया आलिखितः । प्रवृत्तमदनमहोत्सवे भगवान् अनङ्ग इति । पुनरपि भणति—सखि, कस्मात्त्वया अहमत्र आलिखिता ? सखि, किम् अकारणे कुप्यसि ? यादृशस्त्वया कामदेव आलिखितः, तादृशी मया रतिः आलिखिता इति । तद् अन्यथासम्भाविनि ! किं तव एतेन आलपितेन ? कथय सर्वं वृत्तान्तम् । भो वयस्य, किं नु इदम् ?

(क) भो वयस्य ! युज्यते खलु एतत् ।

(ख) भोः पुनरपि एषा एवं भणति—सखि, मा लज्जस्व । ईदृशस्य कन्यारत्नस्य अवश्यमेव ईदृशे वरे अभिलाषेण भवितव्यम् । (ग) भो वयस्य, मा पण्डितगर्व्वम् उद्वह । अहं ते एतस्याः मुखात् श्रुत्वा सर्वं व्याख्यास्यामि । या एषा आलिखिता सा खलु कन्या दर्शनीया ।

( इत्यभावाकर्ण्यतः )

वसन्तकः—भो वअस्स ! सुदं तुए जं एदाए मंतिदं—सहि ! अदोपि मे अहिअदरं सन्तावो वट्टदि। सहि ! अवणेहि इमाइं णलिणीपत्ताइं मुणालवलआइं च। अलं एदिणा। कीस अआरणे अत्ताणं आआसेसि ? (क)

राजा—वयस्य ! न केवलं श्रुतम्, अभिप्रायोऽपि लक्षितः।

वसन्तकः—भो वअस्स ! अज्जवि कुरकुराअदि एव्व एसा सारिआ दासीए धीआ। ता सव्वं सुणिअ अक्खाइस्सं। (ख)

(क) भो वयस्य, श्रुतं त्वया यत् एतया मन्त्रितं—सखि, अतोऽपि मे अधिकतरं सन्तापो वर्त्तते। सखि, अपनय इमानि नलिनीपत्राणि मृणालवलयानि च। अलमेतेन। कस्मात् अकारणे आत्मानम् आयासयसि ?

(ख) भो वयस्य, अद्यापि कुरकुरायते एव एषा सारिका दास्याः पुत्री। तत् सर्व्वं श्रुत्वा व्याख्यास्यामि।

औदरिकस्य उदरपूरणकुशलस्य—'उदराट् ठगाद्यूने' इति ठक्। अभ्यवहारः भक्षणम्। 'अभ्यवहृतान्नजग्ध' इत्यमरः। आलपितेन भाषितेन। औपकृतः गोपायितः। आयासयसि खेदयसि। कुरकुरायते कुरकुर इति अस्पष्टं शब्दं करोति। व्याख्यास्यामि विस्तरतः कथयिष्यामि।

**Beng. Trans.** বসন্তক—এই ব্রাহ্মণের ভোজনের ব্যবস্থা করা হউক—এই কথা বলিতেছে।

রাজা—সকল জিনিষই পেটুকের খাদ্যদ্রব্যে পর্য্যবসিত হয়। এখন সত্য কথা বল, সারিকা কি বলিতেছে।

বসন্তক—( শুনিয়া ) বয়স্য, এ যাহা বলিল তাহা ত আপনি শুনিয়াছেন। এই সারিকা বলিতেছে—'সখি, তুমি কাহাকে (এই চিত্রে) অঙ্কিত করিয়াছ ? মদনমহোৎসব আরম্ভ হইলে ভগবান্ অনঙ্গকে অঙ্কিত করিয়াছি।' পুনর্ব্বার বলিতেছে—'সখি, আমাকে তুমি কেন এখানে অঙ্কিত করিলে ? সখি, অকারণে কেন তুমি কোপ করিতেছ ? তুমি

যেরূপ কামদেবকে অঙ্কিত করিয়াছ, আমিও সেইরূপ রতিদেবীকে অঙ্কিত করিয়াছি। অতএব, হে অন্যথা আশঙ্কাকারিণি! তোমার এইরূপ আলাপ করিবার কি প্রয়োজন? সকল বৃত্তান্ত খুলিয়া বল।' ভো বয়স্য, এই ব্যাপারটা কি?

রাজা—বয়স্য, আমার মনে হইতেছে কোনও কামিনী অনুরাগবশতঃ নিজের হৃদয়-বল্লভকে (চিত্রে) অঙ্কিত করিয়া কামদেব বলিয়া ছলপূর্ব্বক সখীর সম্মুখে গোপন করিয়াছিল। তার পর সখীও চিনিতে পারিয়া চতুরতার সহিত সেই (চিত্রে) রতিচ্ছলে সেই স্ত্রীলোকটিকে অঙ্কিত করিয়া প্রদর্শিত করিয়াছে।

বিদূষক—(তুড়ি দিয়া) বয়স্য, ঠিক, ইহা যুক্তিযুক্ত বটে!

রাজা—বয়স্য, চুপ কর! আবার আলাপ করিতেছে। শোনা যাক।

(উভয়ে শুনিতে লাগিলেন)

বিদূষক—ভো! ও আবার এইরূপ বলিতেছে—'সখি, লজ্জা করিও না। এইরূপ কন্যারত্নের অবশ্য এইরূপ বরে অভিলাষ হওয়াই উচিত'।

রাজা—(নিশ্চয় ইহার) কোন যুক্তি আছে।

বিদূষক—বয়স্য, পাণ্ডিত্যের গর্ব্ব করিবেন না। আমি ইহার মুখ হইতে সমস্ত শুনিয়া (আপনাকে) ব্যাখ্যা করিয়া (বুঝাইয়া) দিব। এই যে কন্যাকে অঙ্কিত করা হইয়াছে সে (যথার্থই) দর্শন-যোগ্যা!

রাজা—যদি তাহাই হয়, তবে মন দিয়া শোনা যাক। এখানে আমাদের কৌতূহলের অবকাশ আছে।

(উভয়ে শুনিতে লাগিলেন)

বসন্তক—বয়স্য, সে যাহা বলিল আপনি তাহা শুনিয়াছেন—'সখি, এইজনাই আমার অধিকতর সন্তাপ বৃদ্ধি পাইতেছে। সখি, এই নলিনীপত্র ও মৃণালবলয়গুলি অপসারিত কর। কি জন্য অকারণে নিজেকে (এত) কষ্ট দিতেছ'?

রাজা—বয়স্য, আমি কেবল শুনি নাই, (ইহার) অভিপ্রায়ও বুঝিয়াছি।

বসন্তক—বয়স্য, এখনও পর্য্যন্ত এই দাসীপুত্রী সারিকা অস্পষ্ট ভাবে (কুরকুর করিয়া) আবার কি বলিতেছে। অতএব, সেই সকল শুনিয়া ব্যাখ্যা করিব।

**Eng. Trans**. Vasantaka. (She) says that let something be given to this Brâhmana to eat.

**King.** Everything is transformed to an eatable to a glutton. Come, say truly what does the Sârikâ utter?

Vasantaka. (Listening) O friend, you have heard what she has said. She says—'my friend, who is this that has been delineated by you (in the picture)? The blessed bodiless god (Ananga) when the great Cupid-festival set in'—(is her reply). (She) speaks again—'why have I been delineated here by you? Friend, why are you getting offended without reason? I have portrayed a Rati ( Psyche ) similar to the Kámadeva (Cupid) which has been drawn by you. O you who are apt to think otherwise (misinterpret), what is the use of these talks of yours? Speak out truly everything.' O friend, what does this mean?

King, Oh friend, I surmise, some female having drawn her sweet-heart's portrait out of love, concealed (the fact) before her companion (by passing the portrait off) as the picture of the god of love; her friend, too, having found it out, ingeniously delineated her in the character of Rati (Kama's wife).

Vasantaka. (Snapping the fore-finger) very likely, very likely, my friend?

King. O my friend, be silent; she speaks again; let us hear.

( They listen )

Vasantaka. Oh friend, she is again chattering—'My friend, do not be ashamed! A jewel of a maiden of this (your) type must needs have a desire for a bridegroom of such worth.'

King—Surely, there must be some reason.

Vasantaka—Oh, friend, do not presume upon your own scholarship. I shall expound all she says when she has finished. The lady that is painted, is surely charming to look at.

King—If it be so, then let us hear attentively. There is a scope for our curiosity in this matter.

( Both listen )

Vasantaka. Very well, my friend, you have heard what she says—'My friend, affliction is growing more on this account. My friend, take away these lotus-leaves and stalks. Enough of these. Why are you taking trouble for nothing ?"

King. My friend, not only I have heard, but also I have gathered the purport thereof.

Vasantaka. O friend, this harlot's daughter of a starling still chatters ; but I shall explain all after I hear.

राजा—युक्तमभिहितम् ।

( पुनराकर्णयतः )

वसन्तकः—भो वअस्स ! एसा क्खु सारिआ दासीए धीआ चउव्वेदी बह्मणो विअ रिचाइं भणिदुं पउत्ता । (क)

राजा—वयस्य, कथय । किमप्यन्यचेतसा मया नावधारितं किमनयोक्तमिति ।

वसन्तकः—भो ! एव्वं भणादि—

दुल्लहजणअणुराओ लज्जा गरुई परव्वसो अप्पा ।
पिअसहि ! बिसमं पेम्मं मरणं सरणं तु बरमेक्कं ॥७॥ (ख)

राजा—( सस्मितम् ) एवंविधं भवन्तं ब्राह्मणं [1]मुक्त्वा कोऽन्य एवंविधानामृचामभिज्ञः ?

वसन्तकः— तदो किं णु क्खु एदं ? (ग)

(क) भो वयस्य, एषा खलु सारिका दास्याः पुत्री चतुर्वेदी ब्राह्मण इव ऋचो भणितुं प्रवृत्ता ।

(ख) भोः, एवं भणति—

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि विषमं प्रेम मरणं शरणं तु वरमेकम् ॥

(ग) ततः किं नु खलु इदम् ?

---

1 साधु भवन्तं महाब्राह्मणम् ।

राजा—ननु गाथिकेयम्[1] ।

वसन्तकः—किं गाधिआ । तदो किं कहिअं ? (क)

राजा—वयस्य ! कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवितनिरपेक्षयोक्तम् ।

वसन्तकः—(उच्चैर्विहस्य) भो ! किं एदेहिं वक्कभणिदेहिं ? उज्जुअं एव्व किं ण भणासि—जह मं एव्व अणासाअन्ती एत्ति, अण्णहा को अण्णो कुसुमचावव्ववदेसेण णिह्णवीअदि ? (हस्ततालं दत्त्वा उच्चैर्विहसति) (ख)

राजा—(ऊर्ध्वमवलोक्य) धिङ् मूर्ख ! किमुच्चैर्विहसता त्वया तपस्विनी त्रासितेयं येनोड्डीयान्यत्र क्वापि गता ।

(इति निरूपयतः)

वसन्तकः—(विलोक्य) भो वअस्स ! अण्णहा मा संभावेहि । एसा कअलीघरं एव्व गदा । ता एहि, अणुसरेह्म । (ग)

(इति परिक्रामतः)

राजा—दुर्वारां कुसुमशरव्यथां वहन्त्या
कामिन्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शिशुशुक-सारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति ॥८॥

(क) किं गाथिका ! ततः किं कथितम् ?

(ख) भोः, किं एतैः वक्रभणितैः ? ऋजुकम् एव किं न भणसि, यथा मामेव अनासादयन्त्या इति ? अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते ?

(ग) भो वयस्य, अन्यथा मा सम्भावय । एषा कदलीगृहम् एव गता । तदेहि, अनुसरावः ।

1 गाथिकीयम् ।

वसन्तकः—भो वअस्स ! एदं क्खु कअलीघरं। जाव पविसह्म। (क)

( इत्युभौ प्रविशतः )

वसन्तकः—भो ! अलं दासीए धीआए सारिआए अस्सेसपअत्तेण। इह दाव मलअमारुदुव्वेलंतबालकअलीदलसीअले सिलादले उवविसिअ मुहुत्तअं बीस(म)ह्म। (ख)

(क) भोः वयस्य, एतत् खलु कदलीगृहम्। यावत् प्रविशावः।

(ख) भोः अलं दास्याः पुत्र्याः सारिकायाः अन्वेषणप्रयत्नेन। इह तावत् मलयमारुतोद्वेलद्बालकदलीदलशीतले शिलातले उपविश्य मुहूर्त्तं विश्राम्यावः।

चतुर्व्वेदी चतुर्णां वेदानां समाहारः चतुर्व्वेदं, तदस्यास्तीति इनिः। चतुर्षु वेदेषु अभिज्ञः। ऋचः मन्त्राः। दुर्ल्लभेति। व्याख्यातं प्राक्। एवंविधमिति। विदूषकं प्रति सोल्लुण्ठनोक्तिः, तस्य वेदेषु अनभिज्ञत्वात्। गाथा एव गाथिका स्वार्थे कः। गाथा संस्कृतान्यभाषारचितः श्लोकविशेषः। वक्रभणितैः वक्रोक्तिभिः। ऋजुकम् अकुटिलम्। निह्नूयते गोप्यते। अनासादयन्त्या अप्राप्नुवत्या। कुसुमचापव्यपदेशेन मदनच्छलेन। दुर्व्वारामिति। दुर्व्वारां वारयितुमशक्याम्। कुसुमशरव्यथाम् मदनवाणव्यथां अरसन्तापमिति यावत्। वहन्त्या कामिन्या सखीनां पुरः अग्रतः यदभिहितम् उक्तम् तद् भूयः पुनः शिशुशुकसारिकाभिः उक्तं धन्यानां पुण्यवतां श्रवणपथातिथित्वं श्रवणगोचरत्वमेति। ते एव पुण्यभाजः ये अभिमतजनभाषितं शुकादिमुखेनाकर्ण्य शोवृत्तिं लभन्ते ॥८॥

मलयमारुतेन हेतुना उद्वेलन्त्यः कम्पमानाः या बालकदल्यः तासां दलानि तैः शीतले।

**Prose.** As for shloka 7, See above.

दुर्व्वारां कुसुमशरव्यथां वहन्त्या कामिन्या सखीनां पुरः यदभिहितं तद्भूयः शिशुशुकसारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥८॥

**Beng. Trans.** রাজা—ঠিকই বলিয়াছ।

( আবার উভয়ে শুনিতে লাগিলেন )

বসন্তকঃ—হে বয়স্য, এই দাসীপুত্রী সারিকা চতুর্বেদজ্ঞ ব্রাহ্মণের ন্যায় ঋঙ্‌মন্ত্র পাঠ করিতে আরম্ভ করিল।

রাজা—বয়স্য, কি বল। সে যে কি বলিল, আমি অন্যমনস্ক হওয়া হেতু বুঝিতে পারি নাই।

বসন্তক—সে এইরূপ বলিতেছে,—দুর্লভ জনের প্রতি অনুরাগ, লজ্জা বলবতী ও আত্মা পরাধীন। হে প্রিয়সখি, প্রেম অতি বিষম, এক মরণই শ্রেষ্ঠ আশ্রয়।৭।

রাজা—( হাসিয়া ) তোমার মত এইরূপ ব্রাহ্মণ ব্যতীত আর অন্য কে এই প্রকার ঋঙ্‌মন্ত্র বিষয়ে অভিজ্ঞ হইতে পারে ?

বসন্তক—তাহা হইলে ইহা কি ?

রাজা—ইহা গাথাবিশেষ।

বসন্তক—কি ! গাথা ! তাহা হইলে কি বলিল ?

রাজা—কোন প্রশংসনীয়-যৌবনবিশিষ্টা কামিনী নিজের প্রিয়তমকে না পাইয়া জীবনের প্রতি নিরাশ হওয়ায় এইরূপ বলিতেছে।

বসন্তক—( উচ্চ হাস্য করিয়া ) এইরূপ বক্রোক্তি করিয়া লাভ কি ? সরলভাবে বলিয়া ফেলুন না—'আমাকে ( অর্থাৎ রাজাকে ) না পাইয়া ( এইরূপ করিতেছে )'। তাহা না হইলে অন্য কোন্ লোককে কামদেবচ্ছলে গোপন করা হইতেছে ? ( হাততালি দিয়া উচ্চ হাস্য করিলেন )

রাজা—( ঊর্দ্ধে অবলোকন করিয়া ) ধিক্ মূর্খ ! তোমার এত উচ্চ হাসিতে বেচারী সারিকা ভয়ে উড়িয়া অন্য কোথায় চলিয়া গেল।

( উভয়ে অনুসন্ধান করিতে লাগিলেন )

বসন্তক—( দেখিয়া ) হে বয়স্য, অন্য কিছু মনে করিবেন না। সে এই কদলীগৃহে গিয়াছে ; তা আসুন, অনুসরণ করি।

( উভয়ে পরিক্রমণ করিলেন )

রাজা—দুর্ব্বার মদনব্যথা পাইয়া তন্বী তাঁহার সখীগণের সম্মুখে যাহা বলিয়াছেন, তাহা শিশু-শুক-সারিকা প্রভৃতি পুনর্ব্বার আবৃত্তি করিলে যাঁহারা ধন্য (পুণ্যবান্) তাঁহাদেরই কর্ণগোচর হয়।৮।

বসন্তক—হে বয়স্য, এই ত কদলী-গৃহ। আসুন তবে প্রবেশ করি।

( উভয়ে প্রবেশ করিলেন )

বসন্তক—হে বয়স্য, এই দাসীপুত্রী সারিকার অন্বেষণে ক্লেশ পাইবার কোন প্রয়োজন নাই। এখন এই মলয়-পবন দ্বারা আন্দোলিত নব কদলীবৃক্ষের পত্রচ্ছায়ায় শীতল এই শিলাতলে উপবেশন করিয়া কিছুক্ষণ বিশ্রাম করা যাউক, আসুন।

**Eng. Trans.** King. You have spoken rightly.

(Again both listen)

Vasantaka. O friend, this daughter of a slave-girl (harlot) Sáriká is reciting the hymns of the Rigveda like a Bráhmana well versed in the four Vedas.

King. Friend, tell me (what she said) ; as, with attention diverted, I could not catch what she said.

Vasantaka. O, she speaks thus :—

My love is directed towards a person who is difficult to be attained ; great is my bashfulness (nervousness) ; and my self is dependent on another. My dear friend ! love (of mine) is extremely painful (or unequal). And so surely death alone is my best refuge. 7.

King. (Smiling) With the exception of your self, a worthy Bráhmana, what other learned Bráhmana (who else) would be skilled in such Rik verses ?

Vasantaka. Why then, what is it ?

King. This is a gáthá (popular verse) indeed !

Vasantaka. What, is it a gáthá ! then what is implied (by it) ?

King. Some lady of commendable youth may be supposed to have spoken (the sentence) being indifferent to her life because of being unable to attain her dearest.

Vasantaka. (Laughing loudly) Oh, what is the use of these tortuous expressions ? Why not say straightforward—"The

damsel not being able to attain me"...; otherwise, who else (but your own self) could have been concealed under the pretext of the god of the flowery bow? (Claps his hands and laughs loudly)

King. (Looking up) Peace, you fool! Your loud laughter has so frightened the poor bird that she has flown away somewhere else.

( Both search )

Vasantaka. ( Looking ) Oh friend, do not think otherwise. She has entered the plantain-bower. So let us follow her.

(Both walk round)

King. Enduring the irresistible pain caused by the flowery shafts (of Cupid), whatever the delicate maid spoke to her female companions, the same being repeated by a child, a parrot and a Sárikā (or, a young parrot and a Sárikā) become a welcome guest in the ear passage of the fortunate. 8.

Vasantaka. O friend, here is the plantain-bower; let us enter it.

(Enter both)

Vasantaka. What is the use of taking the trouble of chasing that slave-girl Sárikā? Let us rest for a while on this slab of stone which is cooled by the (shade of the) leaves of these newly-grown banana plants wafted by the soft southern breeze.

राजा—यदभिरुचितं भवते ।

( इत्युपविशतः )

राजा—( निःश्वस्य—दुर्वारामिति पुनः पठति )

वसन्तकः—( पार्श्वतोऽवलोक्य ) भो वअस्स ! एदेण उग्घाडिददुवारेण दुट्ठवाणरेण ताए पञ्जरेण होदव्वं । (क)

(क) भो वयस्य, एतेन उद्घाटितद्वारेण दुष्टवानरेण तस्याः पञ्जरेण भवितव्यम् ।

राजा—वयस्य ! निरूप्यताम् ।

वसन्तकः—जं भवं आणवेदि । ( परिक्रम्यावलोक्य च ) एसो वि चित्तफलओ, जाव णं गेह्णामि । ( गृहीत्वा निरूप्य च हर्षं नाटयति ) (क)

राजा—( सकौतुकम् ) वयस्य ! किमेतत् ?

वसन्तकः—भो वअस्स ! दिट्ठिआ वड्ढसि ! एदं जं मए भणिदं । तुमं ज्जेव्व एत्थ आलिहिदो । अण्णहा को अण्णो कुसुमचावव्ववदेसेण णिह्णवीअदित्ति । (ख)

राजा—( सहर्षं हस्तौ प्रसार्य्य) सखे ! दर्शय दर्शय ।

वसन्तकः—ण दे दंसइस्सं । सावि कण्णआ एत्थ एव्व आलिहिदा । ता किं पारितोसिएण विणा ईदिसं कण्णारअणं दंसीअदि ? (ग)

राजा—( कटकमर्पयन् बलाद् गृहीत्वा पश्यति । विलोक्य सविस्मयम् ) वयस्य ! पश्य पश्य—

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥९॥

अपिच—

विधायापूर्व्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥१०॥

(क) यद् भवान् आज्ञापयति । एषः अपि चित्रफलकः, यावत् ननु (एनं) गृह्णामि ।

(ग) भो वयस्य, दिष्ट्या वर्द्धसे ! एतत् तत् यन्मया भणितम् । त्वमेव अत्र आलिखितः । अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते इति ?

(घ) न ते दर्शयिष्यामि । सापि कन्यका अत्र एव आलिखिता । तत् किं पारितोषिकेन विना ईदृशं कन्यारत्नं दर्श्यते ?

( ततः प्रविशति सागरिका सुसङ्गता च )

सागरिका—सहि सुसंगदे ! ण समासादिदा अम्हेहिं सारिआ, ता चित्तफलअं वि दाव इमादो कअलीघरादो गेह्निअ लहुं आगच्छम्ह[1] । (क)

सुसङ्गता—एव्वं करेम्ह । ( इत्युपसर्पतः )

वसन्तकः—भो वअस्स, कीस उण एसा ओणदमुही आलिहिदा ? (ग)

सुसङ्गता—( आकर्ण्य ) सहि ! जहा वसंतओ मंतेदि तहा तक्केमि भट्टिणा वि एत्थ एव्व होदव्वं । ता कअलीघर-गुम्मांतरिआ भविअ पेक्खम्ह[2] । (घ)

( इत्युभे आकर्णयतः )

(क) सखि सुसङ्गते, न समासादिता अस्माभिः सारिका । तत् चित्रफलकमपि तावत् अस्मात् कदलीगृहात् गृहीत्वा लघु आगच्छावः । (ख) एवं कुर्वः ।

(ग) भो वयस्य, कस्मात् पुनः एषा अवनतमुखी आलिखिता ?

(घ) सखि, यथा वसन्तकः मन्त्रयते, तथा तर्कयामि भर्त्रापि अत्र एव भवितव्यम् । तत् कदलीगृहगुल्मान्तरिता भूत्वा प्रेक्षावहे ।

उद्घाटितद्वारेण मुक्तद्वारेण । लीलेति । ( राजहंसीपक्षे ) लीलया गमनविलासेन अवधूतं कम्पितं कमलं यया सा । ( सागरिकापक्षे ) लीलया हेलया अवधूता तिरस्कृता पद्मा लक्ष्मीः यया सा तिरस्कृतलक्ष्मीका अतिसुन्दरी इत्यर्थः । पक्षपातम् ( हंसपक्षे ) पक्षयोः पातं पक्षसञ्चालनम् । ( कन्यापक्षे ) पक्षे पातम् पक्षपातम् स्नेहमिति यावत् । कथयन्ती ज्ञापयन्ती केयं कन्यका इत्यर्थः । राजहंसीव मानसं मानससरोवरं ( कन्यापक्षे ) चित्तमुपैति आगच्छति । शब्दश्लेषः । आर्य्याछन्दः ॥९॥

विधायेति । अस्याः वर्ण्यमानायाः कन्यायाः इत्यर्थः । अपूर्व्वपूर्णेन्दुं पूर्व्वमनुत्पन्नं पूर्णचन्द्रनिभं मुखं विधाय स्रष्टा निजासनमेव यत् अम्भोजं पद्मं तस्य विनिमीलनेन

1 सुसङ्गता—ण समासादिदा...आगच्छम्ह । सागरिका—सहि ! एव्वं करेम्ह ।
2 सुणम्ह ।

विश्लेषेण निमीलनेन मुकुलीभवनेन दुःस्थितः दुःखेनावस्थितः ध्रुवम् अभूत्। चन्द्रस्योदये कमलानां निमीलनं भवति इति प्रसिद्धिः। आत्मना कृतेन अपूर्व्वमुखचन्द्रेण स्वस्यासन-कमलं निमीलितमभूद् इति धातुः आसनसङ्कोचेन स्वस्थानच्युतिरासीत् इति भावः।

**Prose order.** लीलावधूतपद्मा नः अधिकं पक्षपातं कथयन्ती का इयं राज-हंसीव ( नः ) मानसमुपैति ॥९॥

धाता अस्याः अपूर्व्वपूर्णेन्दुं मुखं विधाय ध्रुवं निजासनाम्भोजविनिमीलनदुःस्थितः अभूत् ॥१०॥

**Beng. Trans.**—রাজা—যাহা তোমার অভিরুচি। ( উভয়ে উপবেশন করিলেন )

রাজা—( নিশ্বাস ফেলিয়া দুর্ব্বারাম্ ইত্যাদি শ্লোকটি পুনরায় পাঠ করিলেন )

বসন্তক—( একপার্শ্বে অবলোকন করিয়া ) হে বয়স্য, এই সেই সারিকার পঞ্জর হইতে পারে। সেই দুষ্ট বানর সম্ভবতঃ ইহারই দ্বার উদ্‌ঘাটিত করিয়া দিয়াছে।

রাজা—ভাল করিয়া দেখ, বয়স্য !

বসন্তক—যাহা আপনি আদেশ করেন। ( পরিক্রমণ ও অবলোকন করিয়া ) এই যে চিত্রফলকটিও এখানে। এখন এইটা গ্রহণ করি। ( গ্রহণপূর্ব্বক অবলোকন করিয়া হর্ষ প্রকাশ )

রাজা—( কৌতুকের সহিত ) বয়স্য, ওটা কি ?

বসন্তক—ভাগ্যক্রমে আপনি উন্নতি লাভ করিতেছেন। আমি যে আপনাকেই বলিতে-ছিলাম—আপনিই ইহাতে অঙ্কিত হইয়াছেন, তা না হইলে অন্য কাহাকে কামদেবচ্ছলে গোপন করা হইবে ?

রাজা—( সহর্ষে দুই হস্ত প্রসারিত করিয়া ) সখে, দেখি দেখি !

বসন্তক—না আপনাকে দেখাইব না। সেই কন্যাও এখানে অঙ্কিত রহিয়াছে। পারিতোষিক বিনা কি এইরূপ কন্যারত্ন দেখান যায় ?

রাজা—( বলয় অর্পণ করিয়াই সবলে গ্রহণ করতঃ দেখিলেন ) বয়স্য, দেখ দেখ,—

রাজহংসী যেমন অবলীলাক্রমে পদ্মকে কম্পিত করিয়া পক্ষবিস্তারপূর্ব্বক মানস-সরোবরে গমন করে, সেইরূপ কে এই ( কন্যা ) লীলাবিলাসে লক্ষ্মীকেও পরাজিত করিয়া আমার প্রতি অধিক স্নেহ প্রদর্শন করতঃ আমার চিত্তে প্রবেশ করি-তেছেন ? ॥৯॥

পুনশ্চ—

ব্রহ্মা ইঁহার মুখকে অপূর্ব্ব পূর্ণচন্দ্রসদৃশ করিয়া সৃষ্টি করায় তাঁহার নিজের আসনপদ্ম নিমীলিত হইয়া যাওয়াতে নিশ্চয়ই তাঁহার ( আসনে ) অবস্থান কষ্টকর হইয়াছিল ॥১০॥

( তারপর সুসঙ্গতা ও সাগরিকার প্রবেশ )

সাগরিকা—সখি সুসঙ্গতে, আমরা সারিকাকে পাইলাম না। এখন চিত্রফলকখানি কদলীগৃহ হইতে শীঘ্র লইয়া আসি।

সুসঙ্গতা—তাহাই করা যাউক। ( উভয়েই কদলীগৃহের নিকটে চলিলেন )

বসন্তক—হে বয়স্য, কিজন্য ইঁহাকে অবনতমুখী করিয়া অঙ্কিত করা হইয়াছে ?

সুসঙ্গতা—সখি, যখন বসন্তক কথা বলিতেছেন, তখন মনে হইতেছে মহারাজও এখানে নিশ্চয় আছেন। তবে এস, কদলীগৃহের গুল্মান্তরালে থাকিয়া দেখি।

( উভয়ে শুনিতে লাগিলেন )

**Eng. Trans.** King. As you please (they sit and the King sighs and repeats the verse—Enduring......etc.)

Vasantaka. (Looking to one side) O friend, this must be the cage of that Sáriká broken open probably by that wicked monkey.

King. Friend, observe carefully.

Vasantaka. As you command (Walking round and looking) Here is the picture-board too. I shall take it up. ( Takes it up, looks, and expresses delight)

King. (Eagerly) What is that ?

Vasantaka. O friend, fortunately you are in good luck. Just as I said, here you are delineated (in the picture). Who but yourself could have been concealed under the pretext of the god of the flowery bow ?

King. (Holding out his hands with delight) My friend, just let me see, (show it to me).

Vasantaka. I shall not show you now. That damsel too is here delineated. So, is such a jewel of a girl to be shown without any reward ?

King. (gives him a bracelet and at once taking the picture by force looks at it. Looking—with surprise) Ha ! behold, my friend—

What lovely damsel drawn in the picture is this, that waving a lotus with graceful flurry (or overshadowing the fame of Padmá or Lakshmi by her graceful flurry), and showing much more affection towards me, is occupying my mind, as a lovely swan, shaking the lotus by graceful movement and flapping her wings, retire to the Mánasa lake. 9.

Again,—Surely, the Creator having created her face like an unforeseen full moon underwent sorrow (lit. became badly seated) when the lotus used for his seat got closed. 10.

(Then enter Ságariká and Susangatá)

Ságariká. My friend Susangatá, we could not get at the parrot. So let us get the picture-board from the plantain-bower and come back very soon.

Susangatá. Let us do that. (They approach)

Vasantaka—Ha ! friend, why has she been drawn with her face downwards ?

Susangatá. (Hearing) My friend, as I hear Vasantaka talking, so I suspect that the King also must be here. Let us therefore, conceal ourselves amongst the plants of the plantain-bower and see. ( Both hear )

राजा—वयस्य ! पश्य पश्य—( विधायापूर्व्वपूर्णेन्दुमित्यादि पुनः पठति )

सुसङ्गता—सखि ! दिट्ठिआ वड्ढसि ! एसो दे हिअअवल्लहो तुमं ज्जेव्व वण्णेदि । (क)

सागरिका—( सलज्जम् ) सहि ! कीस परिहाससीलदाए इमं जणं लहुं करेसि ? (ख)

(क) सखि, दिष्ट्या वर्द्धसे ! एष ते हृदयवल्लभः त्वामेव वर्णयति।

(ख) सखि, कस्मात् परिहासशीलतया इमं जनं लघुं करोषि ?

वसन्तकः—( राजानं चालयित्वा ) णं भणामि—कीस एसा ओणदमुही आलिहिदा ? (क)

राजा—वयस्य ! सारिकयैव सकलमावेदितम् ।

सुसङ्गता—(विहस्य ) सहि ! दंसिदं सारिआए अत्तणो मेहाविक्तणं । (ख)

वसन्तकः—अवि सुहाअदि दे लोअणं ण वेत्ति ? (ग)

सागरिका—( स्वगतम् ) किं एसो भणिस्सदित्ति । सच्चं ज्जेव्व मरणजीविदाणं अंतरे वट्टामि । (घ)

राजा—सुखयतीति किमुच्यते !—

क्लच्छादूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्ये स्यास्त्रिवलीतरङ्गविषमे निष्पन्दतामागता ।
मद्दृष्टिस्तृषितेव सम्प्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥११॥

सागरिका—( श्रुत्वा—स्वगतम्) हिअअ, पसीद पसीद ! समस्सस समस्सस ! मणोरहोवि दे दाणिं एत्तिअं भूमिं गदो । (ङ)

(क) ननु भणामि । कस्मादेषा अवनतमुखी आलिखिता ?

(ख) सखि, दर्शितं सारिकया आत्मनो मेधावित्वम् ।

(ग) अपि सुखयति ते लोचनं न वा इति ?

(घ) किमेव भणिष्यतीति । सत्यमेव मरणजीवितयोः अन्तरे वर्ते ।

(ङ) हृदय, प्रसीद प्रसीद ! समाश्वसिहि समाश्वसिहि ! मनोरथोऽपि ते इदानीं एतावतीं भूमिं गतः ।

---

1 ससाध्वसम् ।

सुसङ्गता—सहि ! सुदं तुए ? (क)

सागरिका—( विहस्य ) तुमं एव्व सुणु, जाए आलेक्खविण्णाणं वण्णीअदि। (ख)

वसन्तकः—( फलकं निर्वर्ण्य ) भो वअस्स ! जस्स उण ईदिसीओवि एव्वं पिअसमागमं बहु मण्णन्ति, तह(स्स)वि अत्तणो उवरि को पराहवो, जेण एत्थ एव्व ताए आलिहिदं अत्ताणअं ण पेक्खसि ! (ग)

(क) सखि, श्रुतं त्वया ?

(ख) त्वमेव शृणु, यस्याः आलेख्यविज्ञानं ( विन्यासः ) वर्ण्यते ।

( ग ) भो वयस्य ! यस्य पुनः ईदृश्योऽपि एवं प्रियसमागमं बहु मन्यन्ते, तस्यापि आत्मनः उपरि कः पराभवः ?—येन अत्रैव तया आलिखितम् आत्मानं न प्रेक्षसे !

लघु हीनम् । कृच्छ्रादिति । कृच्छ्रात् कष्टात् व्यतीत्य अतिक्रम्य नितम्बस्थली चिरं भ्रान्त्वा ऊरुयुगस्य नितम्बस्थलस्य च अतिविशालत्वेन तत्र तत्र भ्रमणस्य सुचिरत्वम् इत्यर्थः । त्रिवलीतरङ्गविषमे त्रिवल्यः उदरस्थाः तिस्रः रेखाः सौन्दर्यसूचिन्यः इत्यर्थः ; ता एव तरङ्गाः तैः विषमे दुर्गमे । मध्ये कटिदेशे जघने च निष्पन्दताम् निश्चलताम् आगता प्राप्ता । यथा नरः कश्चित् तरङ्गबहुलां नदीमेत्य किं करोमीति चिन्तापरा निष्पन्दं तिष्ठति तथा एव इति भावः । मद्दृष्टिः मम लोचनं तुङ्गौ स्तनौ शनैः आरुह्य स्तनयोः मनोरमतया समुन्नततया च । तृषितेव पर्वतमारुह्य यथा काचित् रमणी तृषार्ता भवति तथैवेति भावः । सम्प्रति साकाङ्क्षं सस्पृहं तृषानिवारणेच्छया इत्यर्थः । तस्याः जललवप्रस्यन्दिनी जलबिन्दुस्राविणी लोचने ईक्षते । यथा काचित् उच्चैः विशालां भूमिमतिक्रम्य पर्वतमारुह्य तृषार्ता सती पुरः प्रस्रविणीमालोक्य तृषानिवारणेच्छया तां सस्पृहं पश्यति तथा मे दृष्टिः । अत्र दृष्टेः विशालनितम्बोरुयुगत्रिवलीविषममध्यादि-भ्रमणव्यपदेशेन कस्याश्चित् स्त्रियाः क्लेशाकुलं भ्रमणमाक्षिपतीति समासोक्तिरलङ्कारः । शार्दूलविक्रीडितम् वृत्तम् ॥ ११ ॥ यस्य तव इत्यर्थः । ईदृश्यः अपि एवम्भूताः रमणीयाकृतयः स्त्रियोऽपि प्रियसमागमं बहु मन्यन्ते आद्रियन्ते । तस्यापि तवापि आत्मनः उपरि कः पराभवः कथमनादर इत्यर्थः ।

---

1 विप्राणी ।

**Prose.**—मद्दृष्टिः कृच्छ्रात् अस्याः ऊरुयुगं व्यतीत्य नितम्बस्थले सुचिरं भ्रान्त्वा त्रिवलीतरङ्गविषमे मध्ये निष्पन्दतामागता, सम्प्रति तृषिता इव मन्दं तुङ्गौ स्तनौ आरुह्य साकाङ्क्षं जललवप्रस्यन्दिनी लोचने मुहुः ईक्षते ॥ ११ ॥

**Beng. Trans.** রাজা—বয়স্য ! দেখ, দেখ—( বিধায়াপূর্ব্বম্ ইত্যাদি শ্লোক পুনরায় পাঠ করিলেন )

সুস—সখি, সৌভাগ্যক্রমে তোমার অদৃষ্ট সুপ্রসন্ন ! এই যে তোমার হৃদয়বল্লভ তোমারই ( রূপ ) বর্ণনা করিতেছেন।

সাগরিকা—( সলজ্জভাবে ) সখি, পরিহাসশীলতাহেতু এই হতভাগিনীকে কেন ( লোক-চক্ষে ) হীন করিয়া দিতেছ ?

বসন্তক—( রাজাকে ধাকা দিয়া ) আমি জিজ্ঞাসা করিতেছি, কেন ইঁহাকে অবনত-মুখী করিয়া অঙ্কিত করা হইয়াছে ?

রাজা—বয়স্য ! সারিকাই সকল কথা বলিয়াছে।

সুসা—( হাসিয়া ) সখি, সারিকা নিজের মেধাবিত্বের পরিচয় দিয়াছে।

বস—আপনার চক্ষুর খুব সুখ হইতেছে কি না ?

সাগরিকা—( স্বগত ) ইনি কি না জানি বলিবেন ! সত্যই আমি জীবন-মরণের সন্ধিস্থলে বর্ত্তমান রহিয়াছি।

রাজা—( কিরূপ ) সুখ হইতেছে সে কথা আর কি বলিব ! আমার দৃষ্টি অতি কষ্টে উরুযুগল ও নিতম্বস্থলে অনেকক্ষণ ভ্রমণ করিয়া মধ্যদেশের দুর্গম ত্রিবলীতরঙ্গের ( নিকট ) আসিয়া নিস্পন্দতা প্রাপ্ত হইয়াছে ; এবং তৎপরে উত্তুঙ্গ স্তনযুগলে ধীরে ধীরে আরোহণ করিয়া তৃষিতের ন্যায় জলকণাস্রাবী লোচনদ্বয়কে সস্পৃহভাবে মুহুর্মুহুঃ নিরীক্ষণ করিতেছে। ১১ ।

সাগ—( শুনিয়া—আত্মগত ) হৃদয় ! প্রসন্ন হও, আশ্বস্ত হও ! তোমার মনোরথও এখন এতদূর পর্য্যন্ত আসিয়াছে।

সুস—সখি, শুনিলে ত ?

সাগ—তুমিই শোন—যাহার চিত্রবিদ্যার এত বর্ণনা ( প্রশংসা ) হইতেছে।

বস—( চিত্রফলক দেখিয়া ) হে বয়স্য ! ঈদৃশ সুন্দরীগণও যাঁহার সহিত প্রীতিকর সম্মিলনের ( এতদূর ) সমাদর করিতেছেন, সেই ( আপনার ) নিজের উপর এত অনাদর ( অবিশ্বাস ) কেন, যাহার জন্য আপনি তৎকর্তৃক ( চিত্রে ) অঙ্কিত আপনাকেও দেখিতেছেন না !

**Eng. Trans.** King. Friend ! behold, behold—(Repeats the shloka विधाधापूर्व etc. )

Susa. You are in luck, my friend ! your sweet-heart is describing you ( dwelling upon your charms ).

Sága. ( Bashfully ) My friend ! out of your inborn tendency to cutting jokes, why do you ( how can you ) make so light of me ?

Vás. (Pushing the King) Now I ask you, why has she been painted with her face cast down ?

King. Friend ! The Sáriká has told us all.

Sus. ( Smiling ) That Sáriká has revealed her power of repeating whatever she hears ( lit. retentive faculty or intelligence ).

Vas. ( Well ), does ( she ) please your eyes ?

Ság. ( To herself ) what will he say ( in reply ) ? True indeed ! I hang between life and death !

King. Please ( my eyes ) say you ! (What to speak of how she pleases my eyes ! )—

My sight, passing over the pair of thighs with difficulty and wandering over the buttocks for a long time, has stood still coming to the middle ( waist ) uneven with the three wave-like folds ( wrinkles of her belly ) ; and now slowly ascending the pair of high ( plump ) breasts, is like a thirsty creature, wistfully looking again and again at her eyes, from which oozes drops of water ( tears ). 11.

Ság. ( Hearing—to herself ) My heart ! be pleased and consoled ! your desire also has travelled so far !

Sus. My friend ! do you hear ?

Ság. ( Smiling ) You do hear please ; ah, you, whose skill in painting ( or whose execution of the portrait is being described ( i. e., praised ).

Vas. (Looking at the picture) Well friend ! why this want

of self-confidence in you—the covetable union with whom is thus highly thought of by even such ( beautiful ) girls —that you are not noticing your own self drawn here in this picture by her ?

राजा ( निर्वर्ण्य ) अनया लिखितोऽहमिति यत् सत्यमात्मन्येव बहुमानः, तत् कथं न पश्यामि ? पश्य—

भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुशीकरकणौघः ।
स्वेदोद्गम इव करतलसंस्पर्शादेष[1] मे वपुषि ॥ १२ ॥

सुसङ्गता—सहि ! तुमं ज्जेव्व एक्का सिलाहणीया जाए भट्टावि एव्वं मंतीअदि[2] । (क)

विदूषकः ( पार्श्वतोऽवलोक्य ) भो वअस्स ! एदं क्खु ताए सरस-कमलिणीदलमुणालविरइदं मअणावत्थासूअअं सअणीअअं लक्खीअदि । (ख)

राजा—निपुणमुपलक्षितम् । तथाहि—

X परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम् ॥ १३ ॥

अपिच---

स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।

(क) सखि, त्वमेव एका श्लाघनीया यया भर्त्तापि एवं मन्यते ।

(ख) भो वयस्य, एतत् खलु तस्याः सरसकमलिनीदलमृणालविरचितं मदनावस्था-सूचकं शयनीयं लक्ष्यते ।

1 देव । 2 तुमं ज्जेव्व धण्णा सिलाहणीआ च जाए भट्टा एव्वं संतीसीअदि ।

अतिशय[1]परितापग्लापिताङ्ग्या[2] यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥१४॥

विदूषकः—( नाट्येन मृणालिकां गृहीत्वा ) भो वअस्स ! अअं क्खु उवलद्धो[3] अवरो ताए ज्जेव्व पीणत्थणजोग्गो[4] किलिसंतकोमल-मुणालहारो, ता पेक्खदु भवं । (क)

राजा—( गृहीत्वोरसि विन्यस्य सोपालम्भम् ) अयि जड़प्रकृते !

परिच्युतस्तत्कुचकुम्भमध्यात्
किं शोषमायासि मृणालहार ?
न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवतः किमु[5] स्यात् ? ॥ १५ ॥

सुसङ्गता—( आत्मगतम् ) हद्धी हद्धी ! गुरुआणुराअक्खित्त-हिअओ भट्टा असंबद्धं वि मंतिदुं पउत्तो ! ता अदो अवरं उण ण जुत्तं उवेक्खिदुं [6]दाव । ( प्रकाशम् ) सहि ! जस्स किदे तुमं आअदा, सो अअं दे पुरदो चिट्ठदि । (ख)

(क) भो वयस्य, अयं खलु उपलब्धः अपरः तस्या एव पीनस्तनयोग्यः क्लिश्यत्-कोमलमृणालहारः, तत् प्रेक्षतां भवान् ।

(ख) हा धिक् ! हा धिक् ! गुरुकानुरागाक्षिप्तहृदयः भर्त्ता असम्बद्धमपि मन्त्रयितुं प्रवृत्तः । तत् अतोऽपरं (अतः परं ) पुनर्न युक्तमुपेक्षितुं तावत् । सखि, यस्य कृते त्वमागता सोऽयं ते पुरतः तिष्ठति ।

बहुमानः आदरः । भातीति । बाष्पाणां नेत्रजलानां शीकरकणाः जलकणाः

1 अतिगुरु । 2 ग्लापिताभ्यां । 3 अयं अवरो ताए ; उवअदो । 4 हर ; वलअ । 5 कथम् । 6 उवेक्खिदुं, भोदु एव्वं दाव ।

"कणो धान्यांशलेशयोः" इति हैमः। तेषां ओघः समूहः। स्वेदोद्गमः घर्मोत्पत्तिः अनेन सात्त्विकभावोद्रेकः ध्वनितः ॥१२॥ श्लाघनीया धन्या। कमलिनीदलानि पद्मपत्राणि मृणालानि च। तैः विरचितं शयनीयं शय्या।

परिम्लानमिति। पीनस्तनजघनसङ्गात् परिम्लानं सम्मर्दितं तयोरुभयोर्विशालत्वाद् भारवत्त्वाच्च। उभयतः शय्यायाः उभयोर्भागे इत्यर्थः। तनोः मध्यस्य कटिदेशस्य परिमिलनं सम्पर्कम् अप्राप्य कटिदेशस्य क्षीणत्वात् शय्यायां तस्यानवलम्बत्वाच्च शरीरसन्तापेन दाहस्य अभावः इत्यर्थः। हरितम् हरिद्वर्णम् शरीरतापाप्राप्तौ न विवर्णम्। श्लथे शिथिले भुजलते तयोः आक्षेपाः विक्षेपाः वलनानि चलनानि तैः मदनसन्तापाद् इत्यर्थः। व्यस्तन्यासं व्यस्तः भिन्नः आकुलीकृतः इति यावत् न्यासः रचना संस्थानम् इति यावत् यस्याः; तद्भुजाक्षेपात् शय्यायाः स्थानच्युतिः इत्यर्थः। एवंभूतं कृशाङ्ग्याः क्षीणाङ्ग्याः मदनतापाद् इति भावः। नलिनीपत्रशयनम् पद्मपत्रनिर्म्मिता शय्या तस्याः सन्तापं कामदाहं वदति सूचयति ॥ १३ ॥ स्थितमिति। एतत् विशालम् उरसि स्थितं पद्मिनीपत्रं दाहनिवारणार्थमुरसि दत्तमित्यर्थः। तथा अन्तः शरीराराभ्यन्तरे मन्मथोत्थाम् मदनकृताम् अवस्थां न तथा कथयति सूचयति यथा अस्याः कामिन्याः अतिशयेन परितापेन मदनदाहेन म्लापितानि म्लानिं प्रापितानि अङ्गानि यस्याः तस्याः। पाठान्तरे अतिगुरुपरितापम्लापिताभ्याम् निरतिशयेन म्लानिं प्रापिताभ्याम् मण्डलाभ्यां स्तनसंसर्गेण दाहातिशयात् नलिनीपत्रं कृताभ्यां वृत्ताकाराभ्याम् स्तनपरिणाहं स्तनयोः विशालतां ब्रवीति कथयति ॥ मालिनीवृत्तम् ॥ १४ ॥ क्लिश्यत्कोमलमृणालहारः क्लिश्यन् म्लानिं प्राप्नुवन् कोमलानां मृणालानां हारः। जड़प्रकृते मन्दस्वभावे हारमुद्दिश्य राज्ञः सम्बुद्धिरियम्; मृणालस्य जलजत्वात् जलप्रकृतित्वम् ( जलयोनित्वं—प्रकृतिर्नाम उत्पत्तिकारणम् योनिरिति यावत् ) अपि बोध्यम्। डलयोरभेदः। परिच्युतेति। तत्कुचकुम्भमध्यात् परिच्युतः विस्रस्तः किं शोषम् शुष्कताम् आयासि? तावकस्य तव अयम् इति तावकः तस्य त्वत्सम्बन्धिनः इत्यर्थः। सूक्ष्मतन्तोः अपि मृणालसूत्रस्यापीत्यर्थः। तत्र स्तनयोर्मध्ये अवकाशः स्थानं न भवतीत्यर्थः। कुचयोः घनसन्निविष्टत्वात्। भवतः तव किमु स्यात् कथं स्यादित्यर्थः। अतिसूक्ष्मस्य तव सूत्रस्य यत्र स्थानं नास्ति महतः तव तत्र न स्थानं भवितुमर्हति इति जानतापि त्वया शोषः प्राप्यते। अनेन ते जड़प्रकृतित्वं मन्दबुद्धित्वं द्योत्यते ॥ १५ ॥

हा धिगिति । गुरुकानुरागखिन्नहृदयः गुरुकेण महता अनुरागेण प्रेम्णा खिन्नहृदयः विखिन्नचित्तः । असम्बद्धं असंलग्नम् । अचेतने द्वारि चेतनबुद्ध्या तस्य प्रलापोक्तिरित्यर्थः ।

**Prose.**—लिखन्त्यास्तस्याः एषः बाष्पाम्बुशीकरकणौघः मे वपुषि पतितः ( सन् ) करतलसंस्पर्शात् स्वेदोद्गम इव भाति ॥ १२ ॥ पीनस्तनजघनसङ्गात् उभयतः परिम्लानम् तन्वीः मध्यस्य अन्तः परिमिलनम् अप्राप्य हरितम् इदं नलिनीपत्रशयनं श्लथभुजलताक्षेपवलनैः व्यस्तन्यासं ( सत् ) कृशाङ्ग्याः सन्तापं वदति ॥ १३ ॥ एतत् विशालं पद्मिनीपत्रम् उरसि स्थितम् अन्तः मन्मथोत्थाम् अवस्थां न तथा कथयति यथा (एतत्) मण्डलाभ्याम् अतिशयपरितापम्लापिताङ्ग्याः अस्याः स्तनयुगपरिणाहं ब्रवीति ॥ १४ ॥ हे मृणालहार ! तत्कुचकुम्भमध्यात् परिच्युतः ( त्वम् ) किं शोषम् आयासि ? तत्र तावकस्य सूक्ष्मतन्तोः अपि अवकाशः न ( भवति ), भवतः ( अवकाशः) किमु स्यात् ?॥१५॥

**Beng. Trans.** রাজা—( সম্যক্ আলোচনা করিয়া ) বয়স্য ! ইনি যখন আমাকে অঙ্কিত করিয়াছেন, তখন সত্য সত্যই আমার নিজের উপর আদর ( বিশ্বাস ) হইয়াছে। সুতরাং দেখিব না কেন ? দেখ,—চিত্র অঙ্কন করিতে করিতে ইঁহার ( নেত্রবিগলিত ) অশ্রুকণাসমূহ ( চিত্রস্থ ) আমার গাত্রে পতিত হইয়া যেন ইঁহার করতলস্পর্শে উদ্গত-স্বেদবিন্দুর ন্যায় শোভা পাইতেছে। ১২ ।

সুসঙ্গতা—সখি, একাকী তুমিই কেবল প্রশংসার যোগ্য, যাহার জন্য মহারাজও এইরূপ বলিতেছেন।

বিদূষক—( একপার্শ্বে অবলোকন করিয়া ) হে বয়স্য ! এই যে সেই তাঁহার মদনাবস্থা-সূচক সরস নলিনীপত্র ও মৃণালদ্বারা রচিত শয্যা দেখা যাইতেছে।

রাজা—বয়স্য ! ঠিকই লক্ষ্য করিয়াছ। কেননা—এই পদ্মপত্রবিরচিত শয্যা পীনস্তন-জঘনসংস্পর্শে উভয় পার্শ্বে ম্লান হইয়া গিয়াছে, আর ক্ষীণ কটিদেশের সংস্পর্শ না পাওয়ায় মধ্যভাগ হরিদ্বর্ণই ( সবুজ ) থাকিয়া গিয়াছে। শিথিল ভুজলতার বিক্ষেপ ও বিলুণ্ঠন দ্বারা ইহার ( এই শয্যার ) রচনা বিপর্যস্ত হইয়া যাওয়ায় ইহা কৃশাঙ্গীর আন্তরিক সন্তাপ সূচনা করিতেছে ॥ ১৩ ॥

পুনশ্চ—বক্ষঃস্থলে স্থাপিত এই বিশাল পদ্মপত্র ইঁহার আভ্যন্তরীণ মদনাবস্থা ততটা ব্যক্ত করিতেছে না, যতটা ইহা ( পদ্মপত্র ) ( উপরস্থিত ) মণ্ডলদ্বয়ের দ্বারা ( পরিতপ্ত স্তন-

মণ্ডলের চিহ্ন দ্বারা) অতিশয় (আভ্যন্তরীণ) সন্তাপবশতঃ ক্লিষ্ট অবয়ববিশিষ্টা ইঁহার স্তনযুগলের বিশালতাকে সূচিত করিতেছে। ১৪।

বিদূষক—(মৃণাল তুলিয়া লইয়া) হে বয়স্য! এখন দেখুন—তাঁহারই পীনস্তনযোগ্য পরিম্লান কোমল মৃণালহার অপর একটী পাওয়া গিয়াছে।

রাজা—(গ্রহণ করিয়া বক্ষে স্থাপনপূর্ব্বক তিরস্কার করিলেন) হে জড়স্বভাব মৃণালহার! তাঁহার কুচকুম্ভ মধ্য হইতে পরিচ্যুত হইয়া কেন শুষ্ক হইয়া যাইতেছ? সেখানে (যখন) তোমার সূক্ষ্মতন্তুরও থাকিবার স্থান নাই, (তখন) তোমার (স্থান) কিরূপে হইবে? ॥ ১৫ ॥

সুসঙ্গতা—(স্বগত) হা ধিক্, হা ধিক্! নিরতিশয় প্রেমপ্রযুক্ত মহারাজের হৃদয় চঞ্চল হইয়া উঠায় তিনি অসম্বদ্ধ প্রলাপ করিতে আরম্ভ করিয়াছেন। অতএব ইহার পর আর উপেক্ষা করা উচিত নহে। (প্রকাশ্যে) সখি, যাহার জন্য তুমি এখানে আসিয়াছ, তিনি এইখানে তোমার সম্মুখেই রহিয়াছেন।

**Eng. Trans.** King. (Looking scrutinizingly) My friend! It is true that I being delineated by her in the picture, feel (some) regard for my own self. Then why shall I not look at it? Behold—The particles of the drops of her tears falling (on my portrait) while painting the picture, shine as the bursting forth of perspiration on the body due to the touch of her hands. 12.

Susangatá. My friend, you alone are certainly fortunate (praiseworthy)!—Ah, you, for whom even the lord himself speaks in this strain.

Jester. (Looking to one side) Hallo my friend! here is noticed the bed composed of the wet lotus-leaves along with with the lotus-stalks indicating her love-sick condition.

King. My friend, you have noticed well, inasmuch as this bed of lotus-leaves—that has faded away on both the extremities coming in contact with her well-developed breasts and thighs and that still remains green in the middle which has not come into touch with her slender waist and that has been

out of order, owing to the convulsions and tossing of her creeper-like arms,—indicates the ( internal ) affection of that slender-bodied maiden. 13.

Again,—this broad lotus-leaf that has reposed upon her bosom does not reveal so much her internal fervour of love ( lit. love-sick condition ), as it does indicate by means of the two circles ( caused by the shape of her breasts ) the expanse ( fulness ) of the two breasts ( of the girl ) whose limbs are pallied with intense heat. 14.

Jester. (Gesticulating the picking up of the lotus-stalk ) Ah my friend ! behold, here is another vestige—a garland of faded soft lotus-stalks fitting the plump bosom of her alone.

King. (Taking and placing it on his breast,—with reproach) Oh you who are stupid by nature ! Oh you garland of lotus-stalks ! why are you getting withered being fallen from the intervening space of her two pitcher-like breasts ? There is no space there even for the fine fibre of yours, much less for you ! 15.

Susangatá. ( Aside to herself ) Alas ! His Majesty, with his heart perturbed by an intense fervour of love, begins thus to talk incoherently even ; so it will not be proper to overlook it after this. ( Aloud ) My friend, ( the person ) for whom you have come, is here personally present before you.

सागरिका—(सासूयम् ) सहि ! कस्स किदे अहं आअदा ? (क)

सुसङ्गता—( विहस्य ) अइ अस्सस ङ्किदे ! णं चित्तफलअस्स, गेण्ह तं[1] । (ख)

सागरिका—( सरोषम् ) अइ णिउणा क्खु तुमं वि ईदिसाणं

(क) सखि ! कस्य कृते अहमागता ?

(ख) अयि अन्यशङ्किते ! ननु चित्रफलकस्य, गृहाण तत् ।

---

1 ता गेण्ह एदं ।

आलावाणं । ता अस्सदो गमिस्सं । ( इति गन्तुमिच्छति ) (क)

सुसङ्गता—अइ असहणि ! इह दाव मुहुत्तअं चिट्ठ, जाव इमादो कअलीघरादो चित्तफलअं गेह्णिअ आअच्छामि । (ख)

सागरिका—सहि ! एव्वं करेहि । (ग)

सुसङ्गता—एव्वं करेह्मि । (घ)

( सुसङ्गता कदलीगृहाभिमुखं परिक्रामति )

विदूषकः ( सुसङ्गतां दृष्ट्वा ससम्भ्रमम् ) भो वअस्स ! पच्छादेहि एदं चित्तफलअं इमिणा कअलीपत्तेण । एसा क्खु देवीए परिचारिआ सुसंगदा आअदा । (ङ)

( राजा पटान्तेन फलकमाच्छादयति )

सुसङ्गता—( उपसृत्य ) जअदु जअदु भट्टा । (च)

राजा—सुसङ्गते ! स्वागतम् । इहोपविश्यताम् ।

( सुसङ्गता उपविशति )

राजा—कथमिहस्थोऽहं भवत्या ज्ञातः ?

सुसङ्गता—( विहस्य ) ण केवलं देवो, चित्तफलएण सह

(क) अयि, निपुणा खलु त्वमपि ईदृशानामालापानाम् ! तद् अन्यतः गमिष्यामि ।

(ख) अयि असहने, इह तावत् मुहूर्त्तं तिष्ठ, यावद् अस्मात् कदलीगृहात् चित्रफलकं गृहीत्वा आगच्छामि ।

(ग) सखि, एवं कुरु ।

(घ) एवं करोमि ।

(ङ) भो वयस्य, प्रच्छादय एतत् चित्रफलकम् अनेन कदलीपत्रेण । एषा खलु देव्याः परिचारिका सुसङ्गता आगता ।

(च) जयति जयति भर्त्ता !

1 अइ अणिउणा क्खु तुए ईदिसाणं आलावाणं ; [2]अउसलम्हि तुह ईदिसाणं etc. 2 पुस्तकान्तरे नास्ति ।

सव्वो वुत्तंतो वि मए विस्रादो। ता देवीए गदुश्र णिवेद-इस्सं। (इति गन्तुमिच्छति) (क)

विदूषकः—(अपवार्य—सभयम्) भो वअस्स! सव्वं संभावी-अदि। मुहरा क्खु एसा गब्भदासी। ता परितोसेहि णं। (ख)

राजा—युक्तमुक्तं भवता। (सुसङ्गतां हस्ते गृहीत्वा) सुसङ्गते! क्रीड़ामात्रमेतत्। अकारणे त्वया देवी न व्यथयितव्या[1]। इदं ते पारितोषिकम्। (इति कर्णादवतार्य्याभरणं दातुमिच्छति[2])

(क) न केवलं देवः, चित्रफलकेन सह सर्व्वः वृत्तान्तः अपि मया विज्ञातः। तद् देव्यै गत्वा निवेदयिष्यामि।

(ख) भो वयस्य, सर्व्वं सम्भाव्यते। मुखरा खलु एषा गर्भदासी। तत् परितोषय एनाम्।

अन्यशङ्किते अन्येन विपरीताभिप्रायेण शङ्किते। चित्रफलकस्य इति चित्रफलकस्य कृते न तु पुनः राज्ञः कृते इति भावः। ईदृशानां वस्त्वपराणामित्यर्थः। स्वागतं सुष्ठु आगतम् आगमनम् शुभागमनमित्यर्थः। गर्भदासी गर्भादारभ्य दासी आजन्मक्रीतदासी-त्यर्थः। मुखरा कलहप्रिया, परकीयरहस्यप्रच्छादने असमर्था वा।

**Beng. Trans.**—সাগরিকা—(সক্রোধে) সখি, কাহার জন্য আমি (এখানে) আসিয়াছি?

সুসঙ্গতা—(হাসিয়া) অন্যশঙ্কিতে, তুমি চিত্রফলকের জন্য আসিয়াছ। (এখন) তাহা গ্রহণ কর।

সাগরিকা—(সরোষে) তুমিও দেখি, এই প্রকার আলাপে অত্যন্ত নিপুণ। সুতরাং অন্যত্র যাইব। (যাইতে ইচ্ছা করিলেন)

সুসঙ্গতা—অয়ি অসহনে, এইখানে এক মুহূর্ত্ত অবস্থান কর। ততক্ষণে আমি কদলী-গৃহ হইতে চিত্রফলক লইয়া আসি।

1 खेदयितव्या। 2 हस्तादवतार्य्य कटकं, कर्णाभरणञ्चात्मनः उपनीय सुसङ्गतायै दत्त्वा।

সাগরিকা—সখি, তাহাই কর।

সুসঙ্গতা—হাঁ, তাহাই করি।

( সুসঙ্গতা কদলীগৃহাভিমুখে পরিক্রমণ করিল )

বিদূষক—( সুসঙ্গতাকে দেখিয়া—সসম্ভ্রমে) হে বয়স্য, এই কদলীপত্রের দ্বারা চিত্রফলক আচ্ছাদিত করুন। এই যে দেবীর পরিচারিকা সুসঙ্গতা আসিয়া উপস্থিত।

( রাজা বস্ত্রাঞ্চলে চিত্রফলক আচ্ছাদিত করিলেন )

সুসঙ্গতা—( অগ্রসর হইয়া ) মহারাজের জয় হউক !

রাজা—সুসঙ্গতে, স্বাগত ! এইখানে উপবেশন কর।

( সুসঙ্গতা উপবেশন করিল )

রাজা—সুসঙ্গতে, আমি যে এইখানে রহিয়াছি, তুমি কিরূপে জানিলে ?

সুসঙ্গতা—( হাসিয়া ) শুধু আপনাকে নয়, চিত্রফলক সহ সমস্ত বৃত্তান্তই আমি জানিয়াছি। এখন দেবীকে গিয়া সমস্ত নিবেদন করিব।

বিদূষক—(মুখ ফিরাইয়া—সভয়ে) হে বয়স্য, ইহা দ্বারা সবই সম্ভবপর, এই গর্ভদাসীটা ( ভয়ানক ) মুখরা। ইহাকে পরিতুষ্ট করুন।

রাজা—ঠিকই বলিয়াছ। ( সুসঙ্গতার হস্ত ধারণ করিয়া ) সুসঙ্গতে, ইহা ক্রীড়ামাত্র। অকারণে দেবীকে ব্যথা দেওয়া উচিত নয়। এই তোমার পারতোষিক। ( কর্ণাভরণ প্রদান করিতে ইচ্ছা করিলেন )

**Eng. Trans.** Ságariká. ( With intolerance ) My friend, what did I come for, pray ?

Susangatá. Oh, you who are prone to anticipate other things ! I say, for the picture-board (you have come) ; so take it.

Ságariká—( With anger ) Ah you, too, are adept in this sort of talks ! So, I shall go elsewhere. ( Wants to depart)

Susangatá. Oh, impatient one, just stop a moment, while I shall return with the picture-board from this plantain-bower.

Ságariká. My friend, please do so.

Susangatá Yes, I shall do that.

( Susangatá moves towards the plantain-bower )

Jester. (Seeing Susangatá—in a hurry) Oh, friend, just hide

the picture-board with this plantain-leaf ; here comes Susangatá one of the Queen's attendants.

( The King hides the picture-board with his mantle )

Susangatá. ( Approaching ) Glory ( victory ) to Your Majesty !

King. Welcome, Susangatá ! Sit down here. ( Susangatá sits down ) How know you that I was here ?

Susangatá. ( Laughing ) Not only your Majesty, but I have come to know everything in connection with the picture-board. So, now I am going to report all these to Her Majesty.

Jester. ( Apart to the King—with fear ) Oh my friend ! Everything is possible ( with her ). This slave-girl is a great tattler ( or, this slave-maid is very quarrelsome ). So, rather appease her ( with bribe in the form of presents ).

King—You have said rightly ( catching hold of Susangatá's hand ) Oh, Susangatá, this is but a matter of sport (jest) for which the Queen should not be troubled without reason. This is your reward. ( Takes off his earring and offers it to her. )

सुसङ्गता—(स्वगतम्) पसण्णो भट्टा[1] । (प्रकाशम्[2]) अलं सङ्काए । एदिणा भट्टिणो पसादेण अ कीलिदं ज्जेव्व । भट्टिणीए पसादेण बहुदरं कीलिदं ज्जेव्व[3] । एस उण मे गरुओ पसादो करीअदु जं कीस तुए एत्थ चित्तफलए अहं आलिहिदेत्ति भणिअ कुविदा मे पिअसही साअरिआ चिट्ठदि । ता गदुअ पसादीअदु एसा । (क)

(क) प्रसन्नो भर्ता । अलं शङ्कया । एतेन भर्तुः प्रसादेन च क्रीडितमेव । भर्त्र्याः प्रसादेन बहुतरं क्रीडितमेव । एष पुनर्मे गुरुकः प्रसादः क्रियतां यत्, कस्मात् त्वया अत्र चित्रफलके अहमालिखितेति भणित्वा कुपिता मे प्रियसखी सागरिका तिष्ठति । तद् गत्वा प्रसाद्यताम् एषा ।

1. पुस्तकान्तरे नास्ति । 2. प्रणम्य सस्मितम् । 3. ता किं कण्णाहरणेण ?

राजा—( सहसोत्थाय ) सुसङ्गते ! क्व सा[1] ?

सुसङ्गता—भट्टा ! एसा कअलीगुम्मांतरिदा चिट्ठदि[2] । (क)

राजा—आदेशय मार्गम् ।

सुसङ्गता—इदो इदो भट्टा[3] । (ख)

( इति परिक्रामतः )

विदूषकः—भो गेह्णामि एदं चित्तफलअं, एदस्स कज्जं भविस्सदि[4] । ( इति तथाकरोति) (ग)

( सर्वे कदलीगृहाभिक्रान्ताः )

सागरिका—( राजानं दृष्ट्वा सहर्षं ससाध्वसं सकम्पञ्च स्वगतम् ) हद्धी हद्धी ! एदं पेक्खिअ अदिसद्धसेण ण सक्कणोमि पदादो पदं वि चलिदुं । ता किं वा एत्थ करिस्सं ? (घ)

विदूषकः—( सागरिकां दृष्ट्वा ) ही ही भो ! अच्छरिअं अच्छरिअं ! ईदिसं कण्णआरअणं मणुस्सलोए ण दीसदि । ता

(क) भर्त्तः, एषा कदलीगुल्मान्तरिता तिष्ठति ।

(ख) इतः इतः भर्त्ता ।

(ग) भोः, गृह्णामि एतत् चित्रफलकम् । एतस्य कार्यं भविष्यति ।

(घ) हा धिक् हा धिक् ! एनं प्रेक्ष्य अतिसाध्वसेन न शक्नोमि पदात् पदमपि चलितुम् । तत् किं वा अत्र करिष्यामि ?

1. ( ससम्भ्रमुत्थाय ) क्वासौ क्वासौ ? दर्शय दर्शय ।
2. पुस्तकान्तरे नास्ति ।
3. एदु एदु भट्टा ।
4. कदापि इमिणा पुणोवि कज्जं भविस्सदि ।

तक्केमि पआवइणो वि एदं णिम्माइअ विम्हओ समुप्पण्णोत्ति । (क)

राजा—वयस्य ! ममाप्येवं मनसि वर्त्तते—

दृशः पृथुतरीकृता जितनिजाब्जपत्त्रत्विष-
श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ।
शिरांसि चलितानि विस्मयवशाद् ध्रुवं वेधसो[1]
विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ १६ ॥

(क) हो हो भोः ! आश्चर्य्यम् आश्चर्य्यम् ! ईदृशं कन्यारत्नं मनुष्यलोके न दृश्यते । तत् तर्कयामि प्रजापतेरपि एतां निर्म्माय विस्मयः समुत्पन्न इति ।

क्रीड़ितम् एव विनोदनार्थमित्यर्थः । जगतां स्वर्गमर्त्त्यपातालानां त्रयं तत्र ललामभूताम् भूषणभूताम् इमां कन्यां सागरिकारूपां विधाय निर्म्माय वेधसः ब्रह्मणः । वेधसा इति साधीयान् पाठः, अन्यथा विधाय इत्यनेन सङ्गानुपपत्तिः स्यात् । विस्मयवशात् अस्या लावण्यातिशयदर्शनेनेत्यर्थः । जितनिजाब्जपत्त्रत्विषः निजम् अब्जं पद्मम् उपवेशनार्थमित्यर्थः । तस्य पत्त्राणि दलानि तेषां त्विट् । जिता निजाब्जपत्त्रस्य त्विट् याभिः ताः दृशः इत्यर्थः । पृथुतरीकृता विपुलीकृताः अलोकसामान्यरूपदर्शनेनेत्यर्थः । चतुर्भिः मुखैः अपि साधु साधु इति प्रशंसावचनं समं युगपत् व्याहृतम् उक्तम् । शिरांसि चलितानि कम्पितानि चलितानीति यावत् । चल् धातोः अन्तर्भावितणिजन्तत्वात् चलितानि इति । ध्रुवमिति उत्प्रेक्षायाम् । पृथ्वीवृत्तम्—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" ॥१६॥

**Prose.** जगत्त्रयललामभूताम् इमां विधाय वेधसः ( वेधसा वा ) विस्मयवशाद् ध्रुवं शिरांसि चलितानि, चतुर्भिर्मुखैः साधु साध्विति समं व्याहृतम् जितनिजाब्जपत्त्रत्विषः दृशः पृथुतरीकृताः ॥ १६ ॥

**Beng. Trans.** সুসঙ্গতা—( স্বগত ) মহারাজ প্রসন্ন হইয়াছেন। ( প্রকাশ্যে ) ভয় করিবেন না। মহারাজের অনুগ্রহে ( এইটুকু ) তামাসা করিলাম মাত্র। দেবীর অনুগ্রহে অনেক আমোদ করিয়াছি। এখন আমার প্রিয়সখা সাগরিকা—'কেন তুমি আমাকে এই

1. वेधसा ।

চিত্রফলকে অঙ্কিত করিলে'—এই বলিয়া কুপিত হইয়াছেন। তা যাইয়া তাঁহাকে একটু সন্তুষ্ট করুন,—ইহাতেই আমার উপর মহান্ অনুগ্রহ ( করা হইবে )।

রাজা—( সহসা উঠিয়া ) সুসঙ্গতে, তিনি কোথায় ?

সুসঙ্গতা—মহারাজ, তিনি এই কদলীগুল্মের আড়ালে রহিয়াছেন।

রাজা—( তাহা হইলে ) পথ দেখাও।

সুসঙ্গতা—মহারাজ, এই যে এই দিকে।

( উভয়ে পরিক্রমণ করিলেন )

বিদূষক—আমি এই চিত্রফলকটী লইয়া যাইতেছি ; ইহার দ্বারা কাজ হইবে।

( সেইরূপ করিলেন )

( সকলে কদলীগৃহ হইতে নিক্রান্ত হইলেন )

সাগরিকা—( রাজাকে দেখিয়া সহর্ষে সভয়ে কাঁপিতে কাঁপিতে স্বগত )। হা ধিক্ হা ধিক্! ইঁহাকে দেখিয়া অতিশয় ভীতিবশতঃ এক পদ হইতে পদান্তরে চলিতে পারিতেছি না। তা এখন এখানে কি বা করিব ?

বিদূষক—( সাগরিকাকে দেখিয়া ) আহা! আহা! কি আশ্চর্য্য! কি আশ্চর্য্য! ঈদৃশ কন্যারত্ন মনুষ্যলোকে দেখা যায় না। তা আমার মনে হয়, ইঁহাকে নির্ম্মাণ করিয়া প্রজাপতিরও বিস্ময় উৎপন্ন হইয়াছে।

রাজা—বয়স্য, আমারও এইরূপ মনে হইতেছে—

ত্রিভুবনের অলঙ্কারভূতা এই কন্যাকে সৃষ্টি করিয়া বিস্ময়বশে ব্রহ্মা নিশ্চয়ই তাঁহার শির কম্পিত করিয়াছিলেন ও চতুর্ম্মুখে যুগপৎ 'সাধু'বাদ উচ্চারণ করিয়াছিলেন এবং স্বকীয় পদ্মপুষ্পের পত্রের কান্তি-তিরস্কারী লোচনসমূহকে বিস্ফারিত করিয়াছিলেন ॥ ১৬ ॥

**Eng. Trans.** Susangatá—( To herself ) The King is now pleased. ( Aloud ) Your Majesty need not fear. I was but in jest through Your Majesty's grace ; and through Her Majesty's grace I have also indulged in jest thus many times. Now this will be a great favour unto me—my dear friend Ságariká is very angry with me saying, 'why have I been drawn by you in this picture-board' (and I shall be much obliged) if Your Majesty be pleased to approach her and appease her ( resentment ).

King. (Springing up ) Susangatá ! where is she ?

Susangatá. Your Majesty, she is concealed behind this plantain bower.

King. Lead me there ( show me the way there ).

Susangatá. This way, my lord !

( Both walk round )

Jester. Let me take this picture-board ; there may be ( some ) necessity for it. ( Doing so )

( All exeunt from the plantain-bower )

Ságariká. ( Seeing the King with joy, fear and tremor—to herself ) Alas ! Alas ! at the sight of this person I cannot move from one step to another through extreme nervousness ; so what shall I do here ?

Jester. (Seeing Ságariká) Oh, how wonderful ! how wonderful ! such a jewel of a damsel is not to be found in this world of men. So, I guess that after creating her astonishment arose even in the Creator Himself.

King. Friend ! such are my impressions also ( such is in my mind as well )—

When the Creator created this lovely girl the ornament of the three worlds, His heads must have been surely shaken in wonder, His four mouths must have at once exclaimed 'bravo, bravo' in concert, and His eyes, surpassing the beauty of the petals of his own lotus, must have been expanded ( through delight and wonder ). 16.

सागरिका—( सासूयं सुसङ्गतामालोक्य ) सहि ! ईदिसो चित्तफलओ तुए आणीदो ? ( इति गन्तुमिच्छति[1] )। (क)

राजा—दृष्टिं रुषा क्षिपसि, भामिनि ! यद्यपीमां
स्निग्धेयमेष्यति तथापि न रूक्षभावम् ।

(क) सखि, ईदृशः चित्रफलकः त्वयानीतः !

1. इति गच्छति ।

त्यक्त्वा त्वरां व्रज पदैः[1] स्खलितैरयं ते
खेदं गमिष्यति[2] गुरुर्नितरां नितम्बः ॥ १७ ॥

सुसङ्गता—भट्टा ! अदिकोवणा क्खु एसा । ता अग्गहत्थे[3] गेह्णिअ पसादेहि णं । (क)

राजा—( सानन्दम् ) यथाह भवती । ( सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति )

विदूषकः—भो ! एसा क्खु तुए अपुव्वा सिरी समासादिदा ! ( ख )

राजा—वयस्य ! सत्यम् ।—

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा पतत्येष[4] स्वेदच्छद्मामृतद्रवः ॥ १८ ॥

सुसङ्गता—सहि ! अदिणिट्ठुरा दाणिं सि तुमं, जा एव्वं भट्टिणा हत्थे अवलंबिदा वि कोवं ण मुंचेसि[5] । (ग)

सागरिका—(सभ्रूभङ्गम्) अइ सुसङ्गदे ! अज्ज वि ण विरमसि ! ( घ )

(क) भर्तः, अतिकोपना खलु एषा । तद् अग्रहस्ते गृहीत्वा प्रसादय एनाम् ।

(ख) भोः, एषा खलु त्वया अपूर्वा श्रीः समासादिता ।

(ग) सखि, अतिनिष्ठुरा इदानीमसि त्वम्, या एवं भर्त्रा हस्ते अवलम्बितापि कोपं न मुञ्चसि ।

(घ) अयि सुसङ्गते ! अद्यापि न विरमसि !

1. पदस्खलितैः । 2. करिष्यति । 3. हत्थे । 4. स्रवत्येष: । 5. अदक्खिणा ...गच्छिदासि ।

राजा—प्रिये सागरिके ! [1]न खलु सखीजने युक्तमेवं कोपानुबन्धं कर्त्तुम्[2] ।

विदूषकः[3]—भोदि ! बुभुक्खिदो बह्मणो विअ किं कुप्पसि ? (क)

सुसङ्गता*—सहि ! तुए सह ण बोलइस्सं[4] । (ख)

राजा—अयि कोपने ! नैतद्युक्तं समानप्रतिपत्तिषु सखीषु[5] ।

विदूषकः—एसा क्खु अवरा देवी वासवदत्ता ! (ग)

( राजा सचकितं सागरिकाया हस्तं मुञ्चति )

सागरिका—( ससम्भ्रमम्) सुसंगदे ! किं दाणिं करिस्सं ? (घ)

सुसङ्गता—सहि ! एदं तमालविडवं[6] अंतरिअ इदो णिक्कमह्म । (ङ)

( इति निष्क्रान्ते )

राजा—( पार्श्वतोऽवलोक्य सविस्मयम् ) क्वासौ देवी वासवदत्ता ?

विदूषकः—भो ! सा एदं । सा क्खु[7] अवरा देवी वासवदत्ता अदिदीहरोसदाएत्ति भणिदं । ( च )

(क) भवति, बुभुक्षितः ब्राह्मणः इव किं कुप्यसि ?

(ख) सखि, त्वया सह न वक्ष्यामि ।

(ग) एषा खलु अपरा देवी वासवदत्ता !

(घ) सुसङ्गते, किमिदानीं करिष्यामि ?

(ङ) सखि, एतं तमालविटपम् अन्तरित्वा निष्क्रामावः ।

(च) भोः, सा इदम् । सा खलु अपरा देवी वासवदत्ता अतिदीर्घरोषतयेति भणितम् ।

---

1. न खलु युज्यते सखीजने एवंविधः कोपानुबन्धः । 2 अयि प्रसीद । 3, 4, 5. पुस्तकान्तरे न दृश्यते । 6. एदाए कअलीविथिआए । 7. ण आणामि क सा । मए एसा क्खु... । or मा णं एदं । पुस्तकान्तरेषु सागरिकाया उक्तिरियम् ।

दृष्टिमिति। हे भामिनि कोपने, 'कोपना सैव भामिनी' इत्यमरः। यद्यपि इमां दृष्टिं रुषा क्रोधेन क्षिपसि, तथापि स्निग्धा स्नेहपूर्णा इयं दृष्टिः रूक्षभावं पारुष्यं न एष्यति गमिष्यति। त्वरां शीघ्रतां त्यक्त्वा परित्यज्य व्रज भ्रम। स्खलितैः पदैः अनियमित-पदविक्षेपैः साध्वसादित्यर्थः। ते गुरुः नितम्बः नितरां अतिशयं खेदं क्लेशं करिष्यति नितम्बस्य गुरुत्वादित्यर्थः॥ १७॥

श्रीरिति। एषा सागरिका श्रीः लक्ष्मीः स्वयम्। अस्याः पाणिः पारिजातस्य तन्नाम्नः नन्दनकाननोद्भवस्य वृक्षस्य पल्लवः। अन्यथा नो चेत् एषः स्वेदच्छद्मामृतद्रवः स्वेदच्छलेन सात्त्विकभावोदयात् घर्मच्छलेन अमृतस्य द्रवः कुतः अन्यस्मात् कस्मात् वस्तुनः पतति स्रवति परिष्यन्दति? रूपकालङ्कारः। सागरिकायाः श्रियां पाणेश्च पारिजातपल्लवे अभेदेनारोपि-तत्वात्॥ १८॥

अयदृक्ते इत्याद्ये इत्यर्थः, अवयवावयविनोरभेदात् समासः। कोपानुबन्धः कोपपरम्परा। समानप्रतिपत्तिषु समानप्रवृत्तिषु सहृदयेषु इति यावत्। "प्रतिपत्तिः प्रवृत्तौ च" इति मेदिनी।

**Prose.** हे भामिनि! यद्यपि रुषा इमां दृष्टिं क्षिपसि, तथापि स्निग्धा इयं (दृष्टिः) रूक्षभावं न एष्यति। त्वरां त्यक्त्वा व्रज। अयं ते गुरुः नितम्बः स्खलितैः पदैः नितरां खेदं गमिष्यति॥ १७॥

एषा श्रीः, अस्याः पाणिः पारिजातस्य पल्लवः। अन्यथा, कुतः एषः स्वेदच्छद्मामृतद्रवः पतति?॥ १८॥

সাগরিকা—(সক্রোধে সুসঙ্গতার প্রতি অবলোকন করিয়া) সখি, তুমি এইরূপ চিত্রফলক লইয়া আসিয়াছ! (যাইতে ইচ্ছা করিলেন)

রাজা—হে কোপনে! যদিও তুমি সক্রোধ দৃষ্টি নিক্ষেপ করিতেছ, তথাপি তোমার স্নিগ্ধ (দৃষ্টি) কর্কশভাব ধারণ করিতেছে না। তুমি ত্বরা পরিত্যাগ করিয়া গমন কর; নচেৎ পদবিক্ষেপ স্খলিত হইলে তোমার গুরু নিতম্ব অতিশয় ক্লেশ পাইবে॥ ১৭॥

সুসঙ্গতা—মহারাজ! ইনি অতিশয় কোপনস্বভাবা; সুতরাং ইঁহার হস্তাগ্র ধারণ করিয়া ইহাকে প্রসন্ন করুন।

রাজা—(সানন্দে) ভদ্রে, যা' বল।

( সাগরিকার হস্ত ধারণ করিয়া স্পর্শসুখ অনুভব করিতে লাগিলেন )

বিদূষক—ভো! এখন আপনি অপূর্ব্ব শ্রী প্রাপ্ত হইলেন!

রাজা—বয়স্য, সত্য বটে।—

ইনি সাক্ষাৎ লক্ষ্মী, ইহার হস্ত পারিজাত-বৃক্ষের পল্লবস্বরূপ। তাহা না হইলে ঘর্ম্ম-চ্ছলে অমৃতরসধারা কোথা হইতে ক্ষরিত হইতেছে? ॥ ১৮ ॥

সুসঙ্গতা—সখি, তুমি এখন অত্যন্ত নিষ্ঠুর হইয়া উঠিয়াছ, যেহেতু মহারাজ স্বয়ং হস্ত ধারণ করিলেও তুমি কোপ পরিত্যাগ করিতেছে না।

সাগরিকা—( ভ্রুকুটী করিয়া ) সুসঙ্গতে, তুমি এখনও ক্ষান্ত হইতেছ না!

রাজা—প্রিয়ে সাগরিকে, সখীজনের প্রতি এইরূপ নিরবচ্ছিন্ন কোপ করা যুক্তিযুক্ত নহে।

বিদূষক—অয়ি ভদ্রে, বুভুক্ষিত ব্রাহ্মণের ন্যায় কোপ করিতেছেন কেন?

সুসঙ্গতা ( সাগরিকা )—সখি, তোমার সহিত আর কথা বলিব না।

রাজা—অয়ি কোপনে! সমান-প্রবৃত্তিশালিনী ( সহৃদয় ) সখীগণের প্রতি এরূপ করা ঠিক নহে।

বিদূষক—ইনি ( দেখ্‌ছি ) দ্বিতীয় বাসবদত্তা! ( রাজা নিতান্ত ব্যস্ত হইয়া সাগরিকার-হস্ত ত্যাগ করিলেন )

সাগরিকা—( সসম্ভ্রমে ) সুসঙ্গতে, এখন কি করিব?

সুসঙ্গতা—সখি, তমালশাখার আড়াল দিয়া এখান হইতে বাহির হইয়া যাইব।

( উভয়ে নিষ্ক্রান্ত )

রাজা—( পার্শ্বে অবলোকন করিয়া বিস্ময়ের সহিত ) কোথায় দেবী বাসবদত্তা?

বিদূষক—ইনিই সেই। ইহার অতিদীর্ঘকালস্থায়ী রোষ দেখিয়া 'ইনিই দ্বিতীয় বাসবদত্তা'—এই কথা বলিয়াছিলাম।

**Eng. Trans.** Ságariká. ( To Susangatá angrily ) My friend, is this the picture-board you have brought! ( Wishes to go )

King. Oh, angry girl, though you turn your eyes in anger, yet such is their ( native ) tenderness that they cannot assume a harsh expression. Move, giving up hurriedness; otherwise by

your stumbling footsteps, your heavy buttock will feel pain in the extreme. 17.

Susangatá. She is very angry, Sire! take her forearm and pacify her.

King. ( Joyfully ) Madam ! as you advise. ( Takes Ságariká by the hand and feels the delight of her touch )

Jester. Sire, now you have attained unprecedented beauty indeed !

King. You say rightly. She is the very goddess of Fortune ( Lakshmi ) herself ; her hand is the new shoot of the Párijáta tree ; otherwise whence distil these dew-drops of Nectar in the form of sweat ? 18.

Susangatá. My friend, you are very cruel now ; since though His Majesty catches hold of your hand you are not discarding your anger !

Ságariká. ( Frowning ) Oh Sugangatá, will you not forbear still ?

King. My beloved Ságariká, it is not proper to continue (this) angry attitude towards your friend.

Susangatá. (or Ság.) I shall not speak with you, my friend

King. O resentful girl ! it is not proper to cherish such attitude towards your intimate companions ( who possess the same inclinations as yourself ).

Jester. Hey ! she is a second Vásavadattá !

( The King lets go Ságariká's hand with a start )

Ságariká. ( In a hurry ) Susangatá, what to do now ?

Susangatá. Why, my friend, we can escape unperceived behind the branches of the Tamála tree.

( Both exeunt )

King. ( Looking to one side with wonder ) Where is the Queen Vásavadattá ?

Jesser. Hallo ! This is she. I said,—she ( seems to be ) a

second Queen Vásavadattá on account of the long continuance of her angry temper.

राजा—

प्राप्ता कथमपि दैवात् कण्ठमनीतैव[1] सा प्रकटरागा ।
रत्नावलीव कान्ता मम हस्ताद् भ्रंशिता भवता ॥१८॥

( ततः प्रविशति वासवदत्ता काञ्चनमाला च )

वासवदत्ता—हञ्जे कंचणमाले! अध केत्तिअ दूरे दाणिं सा अज्जउत्तेण परिगहिदा णोमालिआ ? (क)

काञ्चनमाला—एदं कअलीघरं अदिक्कमिअ दीसदि । (ख)

वासवदत्ता—तेण हि आदेसेहि मग्गं । तत्थ ज्जेव्व[2] गच्छम्ह । (ग)

काञ्चनमाला—ता एदु एदु भट्टिणी । (घ)

( इति परिक्रामतः )

राजा—क्वेदानीं प्रियतमा[3] द्रष्टव्या ?

काञ्चनमाला—भट्टिणि! जह समीवे भट्टा मंतेदि, तह

(क) हञ्जे काञ्चनमाले, अथ कियद्दूरे इदानीं सा आर्यपुत्रेण परिगृहीता नवमालिका ?

(ख) एतत् कदलीगृहमतिक्रम्य दृश्यते ।

(ग) तेन हि आदेशय मार्गम् । तत्र एव गच्छावः ।

(घ) तद् एतु एतु भर्त्रि !

1 अनीतैव । 2 तेण तहिं ज्जेव्व । 3 प्रिया ।

वक्के मि भट्टिणिं एव्व पड़िवालअंतो चिट्ठदित्ति। ता उवसप्पदु भट्टिणी। (क)

वासवदत्ता (उपसृत्य) जअदु जअदु अज्जउत्तो। (ख)

विदूषकः—(कथायां फलकं निक्षिप्य उत्तरीयेण प्रच्छादयति) एसा क्खु देवी आअदा[1]। (ग)

राजा—(अपवार्य) वयस्य! प्रच्छादय चित्रफलकम्[2]। देवि! स्वागतम्! इहास्यताम्[3]।

वासवदत्ता—(उपविश्य) अज्जउत्त! अध सच्चकं ज्जेव्व कुसुमिदा णोमालिआ? (घ)

राजा—(सस्मितम्) प्रथमसमागतैरस्माभिस्त्वं चिरयसीति न मा दृष्टा। तदेहि। समेतावेव[4] तां पश्यावः।

वासवदत्ता—(निर्वर्ण्य) अज्जउत्त-मुहाणुराआदो ज्जेव्व मए जाणिदं जहा कुसुमिदा णोमालिअत्ति। ता[5] गमिस्सं। (ङ)

(क) भर्त्रि, यथा समीपे भर्त्ता मन्त्रयते, तथा तर्कयामि भर्त्रीमेव प्रतिपालयन् तिष्ठति। तद् उपसर्पतु भर्त्री।

(ख) जयति जयति आर्य्यपुत्रः!

(ग) एषा खलु देवी आगता।

(घ) आर्य्यपुत्र, अथ सत्यमेव कुसुमिता नवमालिका?

(ङ) आर्य्यपुत्रमुखानुरागात् एव मया ज्ञातं यथा कुसुमिता नवमालिका इति। तद् गमिष्यामि?

1 पुस्तकान्तरे नास्ति। 2 विदूषकी गृहीत्वा कक्षे निक्षिपति। 3 पुस्तकान्तरे नास्ति। 4 सहितावेव। 5 ता च।

**विदूषकः—भोदि ! जइ एव्वं ता जिदं अम्हेहिं[1] । (क)**

( इति बाहू प्रसार्य्य नृत्यति । कक्षायाः फलकं पतति । तद् दृष्ट्वा विषादं नाटयति[2] )

( राजापवार्य्याङ्गुल्या दर्शयन् वसन्तकमुखं पश्यति[3] )

**विदूषकः—( अपवार्य्य ) भो ! मा कुप्प । तुमं[4] चिट्ठ । अहं ज्जेव्व एत्थ जाणिस्सं[5] । (ख)**

**काञ्चनमाला—( फलकं गृहीत्वा ) भट्टिणि ! पेक्ख दाव किं एत्थ चित्तफलए आलिहिदम् । (ग)**

(क) भवति, यदि एवं तत् जितमस्माभिः ।

(ख) भोः, मा कुप्य । त्वं तिष्ठ, अहमेवात्र ज्ञास्यामि ।

(ग) भर्त्रि, प्रेक्षस्व तावत् किमत्र चित्रफलके आलिखितम् ।

कथमपि दैवात् प्राप्ता अधिगता कण्ठम् अनीता एव ( कान्तापक्षे ) कण्ठाश्लेषम् अप्रापिता एव ; ( रत्नमालापक्षे ) कण्ठं गलदेशमप्रापितैव । प्रकटरागा ( कान्तापक्षे ) सुस्पष्टानुरागा ; ( रत्नमालापक्षे ) प्रकाशितलौहित्या । कान्ता रत्नावलीव मम हस्तात् भ्रंशिता विच्याविता । वासवदत्तागमनमुत्प्रेक्ष्य राज्ञा सागरिकायाः हस्तावलम्बः परित्यक्तः । आर्य्यावृत्तम् । श्लेषानुप्राणितोपमा ॥१९॥ प्रतिपालयन् अपेक्षमाणः मुग्धानुरागात् राज्ञः मुखलावण्यविशेषात् ।

**Prose order.**—कथमपि दैवात् प्राप्ता सा प्रकटरागा कान्ता रत्नावली इव कण्ठम् अनीता एव मम हस्तात् भवता भ्रंशिता ॥ १९ ॥

**Beng. Trans.** রাজা—ধিক্ মূর্খ,—উজ্জ্বল লোহিতবর্ণবিশিষ্টা রত্নাবলীর ন্যায় সেই অনুরাগপ্রকাশকারিণী কান্তাকে দৈবযোগে বহু কষ্টে লাভ করিয়া কণ্ঠে ধারণ করিতে না করিতেই আমার হস্ত হইতে তোমাকর্ত্তৃক ভ্রংশিত হইল ।১৯।

1 ही ही भो ! जिदं जिदं… । 2 कक्षात् पतितं फलकं दृष्ट्वा विषादं नाटयति । क्वचित् पुस्तके—तद् दृष्ट्वा विषादं नाटयतीति पाठः नास्ति । 3 (राजा अपवार्य्य विदूषकमङ्गुल्या तर्ज्जयति) । 4 तुण्हीओ । 5 तुमं चिट्ठ इति क्वचित् नास्ति ; अहं ज्जेव्व पच्छादइस्सं ।

(তারপর বাসবদত্তা ও কাঞ্চনমালা প্রবেশ করিলেন)

বাসবদত্তা—কাঞ্চনমালে, এখন আর কতদূরে আর্য্যপুত্র-পরিগৃহীতা সেই নবমালিকা রহিয়াছে?

কাঞ্চনমালা—এই কদলীগৃহ অতিক্রম করিলেই দেখা যাইবে।

বাসবদত্তা—তাহা হইলে পথ দেখাও।

কাঞ্চনমালা—দেবি, আসুন আসুন।

(উভয়ে পরিক্রমণ করিলেন)

রাজা—বয়স্য, কোথায় এখন প্রিয়তমাকে দেখিতে পাওয়া যাইবে?

কাঞ্চনমালা—দেবি, যখন নিকটেই মহারাজ কথা বলিতেছেন, তাহাতে আমার মনে হইতেছে যে তিনি আপনার অপেক্ষা করিয়া রহিয়াছেন। অতএব, (ঐদিকে) অগ্রসর হউন, দেবি!

বাসবদত্তা—(অগ্রসর হইয়া) আর্য্যপুত্রের জয় হউক!

বিদূষক—(কক্ষে চিত্রফলক নিক্ষেপ করিয়া উত্তরীয়দ্বারা আচ্ছাদিত করিলেন) এই যে দেবী আসিয়াছেন।

রাজা—(দেবীকে আড়াল করিয়া বিদূষকের প্রতি) বয়স্য, চিত্রফলক লুকাইয়া ফেল। (দেবীর প্রতি প্রকাশ্যে) দেবি, কুশল ত। এইখানে উপবেশন করুন।

বাসবদত্তা—(উপবেশন করিয়া) আর্য্যপুত্র, সত্যই কি নবমালিকা কুসুমিতা হইয়াছে?

রাজা—(হাস্যের সহিত) দেবি, আমরা প্রথমে আসিলেও আপনি দেরী করিতেছেন দেখিয়া তাহা দেখি নাই। এখন আসুন, এক সঙ্গেই উহা দেখিব।

বাসবদত্তা—(ভালরূপে দেখিয়া) আর্য্যপুত্রের মুখের রক্তিমাতা দেখিয়াই আমি জানিতে পারিয়াছি যে, নবমালিকা কুসুমিতা হইয়াছে। তা এখন (ফিরিয়া) যাই।

বিদূষক—আর্য্যে, যদি তাহাই হয় তাহা হইলে আমাদের জয় হইয়াছে (দুই বাহু প্রসারণ করিয়া নৃত্য, কক্ষ হইতে চিত্রফলক পতন ও তাহা দেখিয়া বিষাদ)

(রাজা দেবীকে আড়াল করিয়া বিদূষকের প্রতি ফিরিলেন ও সঙ্গোপনে অঙ্গুলিদ্বারা দেখাইয়া দিয়া বসন্তকের মুখের দিকে চাহিলেন)

বিদূষক—(রাজার দিকে ফিরিয়া ও অন্য সকলকে আড়াল করিয়া অস্ফুটস্বরে)

ভোঃ, আপনি রাগ করিবেন না। আপনি থাকুন। এইখানে ( কি করিতে হইবে ) তাহা আমিই জানি।

কাঞ্চনমালা—( ফলক গ্রহণ করিয়া ) দেবি, দেখুন দেখুন, এই চিত্রফলকে কি অঙ্কিত রহিয়াছে !

**Eng. Trans.** King. Out on thee, simpleton ! My beloved one who had revealed her passion ( for me), like a jewel-necklace of manifest lustre, and who was somehow attained, was caused to slip away from my hand by you, before she (it) was placed on my neck. 19

(Then enter Vásavadattá and Kánchanamálá)

Vásava. Well, Kánchanamálá, how far from here is my lord's favourite Navamáliká creep ?

Kánchana. we shall see it after passing this plantain-bower.

Vásava. So, show the path. We shall go there.

Kanchana. Come this way, this way, Madam. (Both walk round)

King. My friend, where is my beloved to be seen now ?

Kánchana. Madam, when His Majesty is talking near by, then surely he must be waiting for you. So Madam, please advance in this direction,

Vásava. (Approaching) Glory to Your Majesty !

Jester. (Hides the picture in his armpit and covers it with the upper garment) Here is come Her Majesty.

King. ( Apart ) My friend cover the picture quick. Welcome, Your Majesty ! Here, take your seat.

Vásava (sitting) My lord, has the Navamáliká truly blossomed ?

King. (Smiling) Though we have come earlier, yet finding you late in coming, we have not seen it as yet. So come, we shall now visit it together.

Vásava. (Looking scrutinizingly) My lord, I see by the ruddiness of your countenance that it has flowered. So let us (now) return.

Jester. Your ladyship, if it be so, then we have won. (Stretches forth his two arms and dances ; the picture falls from the armpit. Seeing that he gesticulates sorrow)

[The King covering the view (of the Queen) points (it) out with his finger and looks towards the face of the Jester.]

Jester. (Apart) Hallo ! Donot be angry ; you please wait (or keep quiet) ; I shall manage it. (I alone know what to do in these circumstances).

Kánchana. (Picking up the picture) Behold, Madam, what is drawn in this picture-board !

वासवदत्ता—( निर्वर्ण्य—आत्मगतम् ) अअं अज्जउत्तो । इअं उण साअरिआ ! ( प्रकाशं राजानं प्रति ) अज्जउत्त किं एदं[1] ? (क)

राजा[2]—( सवैलक्ष्यस्मितं ज्ञात्वा अपवार्य ) वयस्य ! किं ब्रवीमि ?

विदूषकः—( अपवार्य ) भो ! मा चिंतां करेहि[3] । अहं उत्तरं दाइस्सं । ( प्रकाशं वासवदत्तां प्रति ) अत्ता किल दुक्खं लिहीअदित्ति मम वचो[4] सुणिअ पिअवअस्सेण एदं विण्णाणं[5] दंसिदं । (ख)

राजा—यथाह वसन्तकस्तथैवैतत् ।

(क) अयम् आर्यपुत्रः । इयं पुनः सागरिका ! आर्यपुत्र, किमिदम् ?

(ख) भोः, मा चिन्तां कुरु । अहं उत्तरं दास्यामि । आत्मा किल दुःखं लिख्यते इति मम वचः श्रुत्वा प्रियवयस्येन एतत् विज्ञानं दर्शितम् ।

1 किं णेदं? 2 काञ्चन—भट्टिणि ! अहं पि एदं एव्व चिंतेमि । वासव—अज्जउत्त ! केण इदं आलिहिदं ? 3 भोदि ! ण अण्णधा संभावेहि । 4 आलिहीअदित्ति मम वअणं । 5 आलिक्खविण्णाणं ।

वासवदत्ता—( फलकं निर्दिश्य ) अज्जउत्त ! एसा वि जा अवरा तुह समीवे आलिहिदा, ता किं अज्जवसंतअस्स विण्णाणं ? (क)

राजा—( सवैलक्ष्यस्मितम् ) देवि ! अलमन्यथा शङ्कया। इयं हि कापि कन्यका[1] स्वचेतसैव परिकल्प्य आलिखिता, न तु दृष्टपूर्व्वा ।

विदूषक—सच्चं सवामि बह्मसुत्तेण जइ कदावि अह्मेहिं ईदिसो दिट्ठपुव्वा ! (ख)

काञ्चनमाला—( अपवार्य ) भट्टिणि ! कदावि ईदिसं [2]गुण-क्खरं संभवदि [3]ज्जेव्व । ता अलं कोवेण । (ग)

वासवदत्ता—( अपवार्य ) अइ उज्जुए, एदस्स वक्कभणिदाइं ण जाणासि ! वसंतओ क्खु एसो ! ( प्रकाशं राजानं प्रति ) अज्ज-उत्त ! मम उण एदं चित्तं पेक्खिअ[4] सीसवेअणा समुप्पण्णा । ता सुहं चिट्ठदु, अज्जउत्तो । अहं गमिस्सं । ( इति उत्थाय गन्तु-मिच्छति ) (घ)

राजा—( पटान्तेन गृहीत्वा ) देवि !

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।

(क) एषापि या अपरा तव समीपे आलिखिता, तत् किं आर्य्यवसन्तकस्य विज्ञानम् ?

(ख) सत्यं शपामि ब्रह्मसूत्रेण यदि कदापि अस्माभिः ईदृशी दृष्टपूर्व्वा !

(ग) भर्त्रि, कदापि ईदृशं गुणाक्षरं सम्भवति ।

(घ) अयि ऋजुके ! एतस्य वक्रभणितानि न जानासि ! वसन्तकः खलु एषः ! आर्य्य-पुत्र, मम पुनः इदं चित्रं प्रेक्ष्य शीर्षवेदना समुत्पन्ना । तत् सुखं तिष्ठतु आर्य्यपुत्रः । अहं गमिष्यामि ।

1 पुस्तकान्तरे नास्ति । 2 ईदिसं उण । 3 संभवदि । 4 पेक्खंतीए ।

न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ॥ २० ॥

वासवदत्ता—( सविनयं पटान्तमाकर्षन्ती ) अज्जउत्त ! मा अण्णधा संभावेहि । सच्चं मं सीसवेअणा बाहेदि[1] । ता गमिस्सं । (क)

( इति निष्क्रान्ते )

(क) आर्य्यपुत्र, मा अन्यथा सम्भावय । सत्यं मां शीर्षवेदना बाधते । तत् गमिष्यामि ।

सवैलक्ष्यम् विलक्षस्य विस्मितस्य विमूढस्य लज्जितस्य वा भावो वैलक्ष्यम् इति ष्यञ्-प्रत्ययः । तेन सह विद्यमानं यथा स्यात् तथा "विलक्षो विस्मयान्विते" इत्यमरः । आत्मा आत्मनः आकृतिरित्यर्थः । विज्ञानम् आलेख्यनैपुण्यम् । ब्रह्मसूत्रेण यज्ञोपवीतेन । घुणाक्षरम् घुणः घुणाख्यः कीटविशेषः जातिस्वभावात् काष्ठं विलिखन् काकतालीयन्यायेन अक्षराकृतिं सम्पादयति सङ्कल्पाभावेनापि हठादित्यर्थः । अत्र काञ्चनमालायाः एवमभि-प्रायः । राज्ञा आलेख्यं विरचता असङ्कल्पितापि कापि कल्पिता ललना चित्रगता जाता ; परं सागरिकायाः आकृत्या सह कल्पितायाः ललनायाः चित्रस्य संवदनं घुणाक्षरन्यायेन दैवादेव सञ्जातम् । तत्र राज्ञः कोपि दोषो नास्ति, यथा वासवदत्ता सम्भावयतीति भावः । प्रसीदेति । प्रसीद प्रसन्ना भव इत्युक्त्या तव कोपप्रसादनं व्यज्यते । तव कोपस्तु नास्ति । कोपाभावे प्रसादनक्रियैव न सम्भाव्यते । एवम् इत्थं दोषमित्यर्थः । पुनः न करिष्यामि इति मया उच्यते चेत् दोषस्याभ्युपगमः स्वीकारः स्यात् । न मे दोषोऽस्तीति ब्रवीमि चेत् त्वमिदं मृषा मिथ्या ज्ञास्यसि अवधारयिष्यसि । एतस्मिन् विषये अस्यामवस्थायां मया किं वक्तुं क्षममिति न वेद्मि जानामि । प्रियतमे इति वासवदत्तां प्रति सम्बुद्धिवचनम् । शिखरिणी वृत्तम् ॥२०॥

**Prose.** प्रसीद इति ब्रूयाम्, असति कोपे इदं न घटते । एवं न पुनः करिष्यामि इति ( वचनेन ) अभ्युपगमः भवेत् । न मे दोषः अस्ति इति त्वम् इदमपि च मृषा ज्ञास्यसि । प्रियतमे, एतस्मिन् किं वक्तुं क्षमम् इति न वेद्मि ॥ २० ॥

---

1 बाधेदि ।

**Beng. Trans.** বাসব—ইনি ত আর্য্যপুত্র ; আর এ ত সাগরিকা ! (রাজার প্রতি) আর্য্যপুত্র, এ কি ?

রাজা—( বিস্ময়ের সহিত মৃদুহাস্য করিয়া বিদূষকের প্রতি ফিরিয়া অনুচ্চস্বরে ) বয়স্য, কি বলিব ?

বিদূষক—( রাজার প্রতি ফিরিয়া ) বয়স্য, চিন্তা করিবেন না। আমি উত্তর দিব। ( বাসবদত্তার প্রতি প্রকাশ্যে ) ভবতি, 'নিজের আকৃতি অতি কষ্টে অঙ্কিত করা যায়' —আমার এই বাক্য শুনিয়া প্রিয়বয়স্য এই চিত্রনৈপুণ্য দেখাইয়াছেন।

রাজা—বসন্তক যাহা বলিলেন, এ তাহাই বটে।

বাসবদত্তা—( চিত্রফলক দেখাইয়া ) আর্য্যপুত্র, আপনার সমীপে এই যে অপর একটী স্ত্রীলোক অঙ্কিত রহিয়াছে, একি আর্য্য বসন্তকের চিত্রনৈপুণ্য ?

রাজা—( বিস্ময়ের সহিত হাসিয়া ) দেবি, অন্য কিছু আশঙ্কা করিবেন না। ( কোনও এক অজ্ঞাত কন্যাকে ) নিজের মনে কল্পনা করিয়া ইহাকে অঙ্কিত করিয়াছি, কিন্তু পূর্ব্বে ইহাকে কখনও দেখি নাই।

বিদূষক—সত্যই যজ্ঞোপবীত স্পর্শ করিয়া শপথ করিতেছি—যদি কখনও পূর্ব্বে এরূপ রমণীকে দেখিয়া থাকি !

কাঞ্চনমালা—( অনুচ্চস্বরে ) দেবি, কখনও কখনও এইরূপ ঘুণাক্ষর ( দৈবাৎ কার্য্য-সম্পাদন ) সম্ভব হইয়া থাকে। সুতরাং রাগ করিয়া প্রয়োজন নাই।

বাসবদত্তা—( কাঞ্চনমালার প্রতি ফিরিয়া—অন্য সকলকে আড়াল করিয়া ) অয়ি সরলে, ইহার বক্রোক্তি তুমি জান না ( বুঝিতে পারিতেছ না )! ইনি বসন্তক ( আর কেউ নয় )! ( রাজার প্রতি প্রকাশ্যে ) আর্য্যপুত্র, আমার কিন্তু এই চিত্র দেখিয়া শিরোবেদনা উপস্থিত হইয়াছে। তা আপনি সুখে অবস্থান করুন। আমি চলিয়া যাইতেছি।

( গাত্রোত্থান পূর্ব্বক যাইতে উদ্যত )

রাজা—( বস্ত্রাঞ্চল ধরিয়া ) দেবি, 'আমার প্রতি প্রসন্ন হউন'—এই কথা কোপ না থাকিলে বলা ঠিক হয় না। 'পুনর্ব্বার এরূপ করিব না'—এইরূপ বলিলেও ( দোষ ) স্বীকার করিয়া লওয়া হয়। 'আমার দোষ নাই'—এই কথা বলিলে আপনি উহা মিথ্যা বলিয়াই ( স্থির ) জানিবেন। হে প্রিয়তমে, এই প্রকার অবস্থায় আমার কি বলা সম্ভবপর ( উচিত ), তাহা বুঝিতে পারিতেছি না ॥২০॥

বাসবদত্তা—( বিনয়ের সহিত বস্ত্রাঞ্চল আকর্ষণ করিয়া ) আর্য্যপুত্র, আপনি অন্ত কিছু মনে করিবেন না। সহসাই শিরোবেদনা আমাকে কষ্ট দিতেছে। অতএব এখন যাই।

( উভয়ে নিষ্ক্রান্ত )

**Eng. Trans.** Vásava. (Looking at it scrutinizingly and to herself) This is my lord, and this is the Ságariká ! (Aloud to the King) What is this, my lord ?

King. (With wonder and smile—Apart to the Jester) My friend, what shall I say ?

Jester. (Apart) Oh ! Fear not, I shall give the reply. (Aloud to Vasavadattá). Madam, do not take it otherwise. Hearing my words that 'it is very difficult to portray one's own likeness,' my friend exhibited this specimen of his painting skill.

King. It is as Vasantaka speaks.

Vásava. (Pointing to the picture-board) My lord, and this female drawn (standing) near you,—is this a specimen of noble Vasantaka's skill ?

King. (With wonder and smiling) O Queen, you should not suspect otherwise. This maiden is portrayed (here) with the help of the pure imagination of my own mind, and she (the original) was never visualized before.

Jester. I will swear to the truth of this by my sacred thread, that such a (maiden) was never before seen by (either of) us !

Kánchana. (Apart) Oh Madam, this sort of accidental coincidence may occur sometimes ( in a fortuitous manner) ; so there is no necessity of getting angry (away with your anger).

Vásava. (Apart) My simple girl, you do not understand his prevarications (evasive reply) ! He is Vasantaka for sooth (and none else) ! (Aloud to the King) My lord, while looking

at this picture I have got a headache. So, stay in comfort, my lord. I am going. (Rises up to depart)

King. (Catching hold of the fringes of her garment) My dearest one, I am really at a loss as to what I can possibly say (to you) in these circumstances. If I would say 'Be pleased', that would not be proper in the absence of (your) anger ; (If I would promise that) 'I shall do so no more,' that would be a sort of confession ; and (if I say that) 'I am not to blame', you will take it as false. 20.

Vásava. (Drawing back the ends of her garment gently —with politeness) Don't think it otherwise, my lord. It is true that a (severe) headache pains me. On that account I take leave.

(Both exeunt)

विदूषक—भो ! दिट्ठिआ वड्ढसे क्खेमेण[1] । अदिक्कन्ता एसा वासवदत्ता अआलवादावली विअ । (क)

राजा—धिङ्मूर्ख ! अलं परितोषेण । याभ्या निगूढो[2] न लक्षितस्त्वया देव्याः कोपानुबन्धः ? पश्य—

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥२१॥

विदूषकः—गदा देवी वासवदत्ता । ता कीस तुमं अरण्ण-रुदिअं करेसि ? (ख)

(क) भोः, दिष्ट्या वर्धसे ! क्षेमेण अतिक्रान्ता वासवदत्ता अकालवातावली इव । (ख) गता देवी वासवदत्ता । तत् कस्मात् त्वम् अरण्यरुदितं करोषि ?

1. क्खेमेण अक्खाणं । 2. आभिजात्यान्निगूढः ।

राजा—तदेहि। देवीं प्रसादयितुमभ्यन्तरमेव प्रविशाव:।

[ इति निष्क्रान्तौ[1] ]

इति कदलीगृहं नाम द्वितीयोऽङ्क:

क्षेमेण सुखेन। अकालवातावली अकाले अनुचितकाले वातावली वातानां वायूनाम् आवली समूह: झञ्झा इति यावत्। यथा अकालवातावली मेघादिसंयुक्ता सहसा आगम्य ध्वंसादिकं विधाय गच्छति तथेयं वासवदत्ता हठाद् आगम्य कोपादिकं कृत्वा गतेत्यर्थ:। भ्रूभङ्ग इति। सहसा उद्गतेऽपि समुद्भूतेऽपि भ्रूभङ्गे भ्रुकुटौ दयितया प्रियया वासवदत्तया स्वामिनं प्रति भ्रुकुटिप्रदर्शनं परिजनसमक्षे अनुचितमिति बुद्ध्या भ्रुकुटिगोपनार्थं वदनं परां नम्रतां नीतम्। अनेन वासवदत्ताया: आभिजात्यं सूच्यते। मां प्रति भेदकारि भेदं द्वैधं करोतीति हृदयस्पर्शि ईषत् हसितम्। साभिप्रायेणहसनेनास्या: सामर्षाभिप्रायो लक्षित:। निष्ठुरं वच: न उक्तम्। आभिजात्यादिति भाव:। अन्त: मध्ये बाष्पजडीकृतं बाष्पै: अश्रुभि: जडीकृतं जलीकृतं व्याप्तमिति यावत्। चक्षु: प्रभुतया क्रोधदमनसामर्थ्येन न विस्फारितं विकासितम्। कोप: प्रकटीकृत: प्रकाशित: किन्तु प्रश्रय: न मुक्त: नम्रत्वं न परित्यक्तम् ॥२१॥ प्रावृट्‌लविक्रीडितम्। अरण्यरुदितं अरण्ये रोदनमिव हर्षेत्यर्थ:।

**Prose order.**—सहसा उद्गतेऽपि भ्रूभङ्गे दयितया वदनं परां नम्रतां नीतम्; मां प्रति भेदकारि ईषत् हसितं; निष्ठुरं वच: नोक्तम्; प्रभुतया अन्तर्बाष्पजडीकृतं चक्षु: न विस्फारितम्; कोपश्च प्रकटीकृत: प्रश्रयश्च न मुक्त: ॥ २१ ॥

**Beng. Trans.** হে বয়স্য, ভাগ্যক্রমে আপনি উন্নতি লাভ করিতেছেন ( অর্থাৎ আপনার ভাগ্য ভাল—খুব বাঁচিয়া গিয়াছেন )। অকাল-ঝঞ্ঝার ন্যায় বাসবদত্তা ভালয় ভালয় চলিয়া গিয়াছেন।

রাজা—দূর মূর্খ! এইরূপ পরিতোষে কোন লাভ নাই। দেবী যখন চলিয়া গেলেন তাঁহার নিগূঢ় ( রুদ্ধ ) ক্রোধবেগ তুমি লক্ষ্য কর নাই। দেখ—

---

1 इति निष्क्रान्ता: सर्वे।

Vásava—My lord, what you say is right indeed ! But how can I expect this much of good fortune !

King—(Aside) Bábhravya, I cannot understand at all how these things happened.

Bábhravya—Listen, my lord !—

(A great uproar behind the scenes)

The fire, assuming the beauty of the golden tops of palaces with its flames and indicating its extreme heat by the scorching of the tops of the closely set trees within the garden, has broken out all on a sudden in the inner apartments where the females are in fright due to scorching, and with its columns of smoke is rendering the pleasure-mountain as black as the clouds laden with water. 14.

(All look around in fright)

King—How is it ! Fire in the inner apartments ! Alas ! (Rising up hurriedly) The Queen Vásavadattá is then burnt to death !

Alas ! This fire, has broken out here, to make, as it were, the false report of the burning of the Queen which in the past was circulated at Lávánaka, a ( pitiable ) truth ! 15.

Vásava—My lord, help, help.

King—Oh, how strange ! I have not noticed the Queen, though seated by my side due to extreme haste ! ( Catching hold of her hand and embracing) Be composed, my love, be composed.

वासवदत्ता—अज्जउत्त ! मए अत्तणो किदे ण भणिदं ! किं उण एसा क्खु मए णिग्घिणाए इध णिअड़े संजमिदा साअरिका विवज्जदि । ता परित्ताअदु अज्जउत्तो । (क)

(क) आर्य्यपुत्र, मया आत्मनः कृते न भणितम् । किं पुनः एषा खलु मया निर्घृणया इह निगड़े संयमिता सागरिका विपद्यते । तत् परित्रायतामार्यपुत्रः ।

राजा—कथं देवि ! सागरिका विपद्यते ! एष गच्छामि ।

वसुभूतिः—देव ! किमिदमकारणमेव पतङ्गवृत्तिः क्रियते ?

बाभ्रव्यः—देव ! युक्तमाह वसुभूतिः ।

विदूषकः—(राजानमुत्तरीये गृहीत्वा) भो ! मा क्खु साहसं करेहि । (क)

राजा—(उत्तरीयमाकर्षन्) अरे ! धिङ्मूर्ख ! सागरिका विपद्यते ! किमद्यापि प्राणाः परिरक्ष्यन्ते[1] । (ज्वलनप्रवेशं नाटयित्वा धूमाभिभवं नाटयति)

विरम विरम वह्ने ! मुञ्च धूमानुबन्धं
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम् ।
विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ॥१६॥[2]

वासवदत्ता—कधं मम दुक्खभाइणीए वअणादो एव्वं ववसिदं[3] अज्जउत्तेण । ता अहंपि अनुगमिस्सं । (ख)

विदूषकः—(परिक्रामन्नग्रतो भूत्वा) भोदि ! अहंपि दे मग्गोवदेसको[4] होमि । (ग)

वसुभूतिः—कथं ! प्रविष्ट एव ज्वलनं वत्सराजः ! तन्ममापि दृष्टराजपुत्रीविपत्तेर्युक्तमिहैवात्मानमाहुतीकर्तुम् ।

(क) भोः, मा साहसं कुरु । (ख) कथं मम दुःखभागिन्याः वचनादेवं व्यवसितमार्यपुत्रेण ? तदहमपि अनुगमिष्यामि । (ग) भवति, अहमपि ते मार्गोपदेशको भवामि ।

---

1. प्राणाः धार्यन्ते । 2. कथमासन्नहुतवहा वर्तते सागरिका ! तत् त्वरितमेनां सम्भावयामि । 3. अज्झवसिदं । 4. पर्योवदेसको ।

बाभ्रव्यः—(सास्रम्) हा महाराज[1] ! किमिदमकारणमेव भरतकुलं संशयतुलामारोपितम् ? अथवा किं प्रलापेन ? अहमपि भक्तिसदृशमाचरामि ।

(इति सर्वेऽग्निप्रवेशं नाटयन्ति)

राजा—(दक्षिणबाहुस्पन्दं निरूप्य) एतदवस्थस्य मम कुत एतत् फलम्[2] ? (अग्रतोऽवलोक्य सहर्षोद्वेगम्) कथमासन्नहुतवहा वर्त्तते सागरिका ! तत्त्वरितमेनां सम्भावयामि[3] ।

(ततः प्रविशति निगडसंयता सागरिका)

सागरिका—(समन्तादवलोक्य) हद्धी हद्धी ! आसमंतदो पज्जलिदो हुदवहो ! अज्ज हुदवहो ! दिट्ठिआ करिस्सदि मे दुक्खावसाणं । (क)

राजा—(त्वरितमुपसृत्य) अयि प्रिये ! किमद्यापि मध्यस्थतया वर्त्तसे ?

(क) हा धिक् ! हा धिक् ! आ समन्तात् प्रज्वलितो हुतवहः । अद्य हुतवहः (आर्य हुतवह) दिष्ट्या करिष्यति मे दुःखावसानम् ।

पतङ्गवृत्तिः पतङ्गस्य वृत्तिः कार्यम् । यथा पतङ्गाः अग्नौ म्रियन्ते तथा त्वमपि मर्त्तुम् गच्छसीत्यर्थः । विरमेति । वह्ने अग्ने विरम विरतो भव । धूमानुबन्धं धूमसन्ततिं मुञ्च परित्यज । अर्चिषां शिखानां चक्रवालं मण्डलं किम् उच्चैः प्रकटयसि प्रकाशयसि ? यः अहं प्रियायाः विरहहुतभुजा विरहाग्निना न दग्धः तस्य ममेत्यर्थः प्रलयदहनभासा प्रलयकालोचितं यत् दहनम् अग्निः तस्य भासा अर्चिषा त्वं किं करोषि करिष्यसि ? किमपि कर्त्तुं न शक्नोषीत्यर्थः । प्रियाविरहादग्निदाहोऽपि मे वरमिति मर्म्मार्थः ॥१६॥ दृष्टराजपुत्री-विपत्तेः राजपुत्र्याः रत्नावल्याः विपत्तिः विनाशः समुद्रनिमज्जनादित्यर्थः । दृष्टा राजपुत्री-

1. हा दैव ! 2. न दृश्यते क्वचित् । 3. (त्वरितमुपसृत्य) अयि प्रिये, किमद्यापि सम्प्रति मे स्वस्थयावस्थीयते ।

विपत्तिः येन तस्य। आहुतीकर्त्तुम् अग्निसात् कर्त्तुम्। संशयतुलाम् जीवितसंशय-तुल्यताम् संशयतुलादण्डम् वा। दुःखावसानम् मृत्युना इत्यर्थः।

**Prose order.** वह्ने, विरम विरम, धूमानुबन्धं मुञ्च। उच्चैः अर्चिषां चक्रवालं किं प्रकटयसि? यः अहं प्रियायाः विरहदहनभुजा न दग्धः, प्रलयदहनभासा तस्य त्वं किं करोषि ॥१६॥

**Beng. Trans.** বাসবদত্তা—আর্য্যপুত্র! আমি নিজের জন্য বলি নাই। কি আর বলিব, নিষ্ঠুর আমি সাগরিকাকে শৃঙ্খলে বাঁধিয়া রাখিয়াছি; সুতরাং আর্য্যপুত্র তাহাকে রক্ষা করুন।

রাজা—কি (বলিলেন) দেবি! (তাহা হইলে) সাগরিকা বিপন্ন হইয়াছে! আমি এখনই যাইতেছি।

বসুভূতি—মহারাজ, অকারণ শলভবৃত্তি অবলম্বন করিতেছেন কেন?

বাভ্রব্য—মহারাজ, বসুভূতি ঠিকই বলিয়াছেন।

বিদূষক—(রাজার উত্তরীয় ধরিয়া) দেখুন, সহসা কোন দুঃসাহসিক কার্য্য করিবেন না।

রাজা—(উত্তরীয় আকর্ষণ করিয়া) ধিক্ মূর্খ, সাগরিকা যখন মরিতে বসিয়াছে, তখন আর কি প্রাণ রক্ষা করা যায়? (অগ্নিতে প্রবেশপূর্ব্বক ধূমাকুল ভাবের অভিনয় করিতে করিতে)

হে বহ্নে, তুমি শান্ত হও, তোমার ধূমজাল পরিত্যাগ কর। তোমার এই উর্দ্ধোত্থিত শিখামণ্ডল প্রকাশ করিয়া আর লাভ কি? যে আমি প্রিয়ার বিরহাগ্নিতে দগ্ধীভূত হই নাই, প্রলয়কালীন অগ্নির শিখা প্রকাশ করিয়া তুমি তাহার কি করিবে? ১৬।

বাসবদত্তা—এ কি! মন্দভাগিনী আমার কথায় আর্য্যপুত্র এইরূপ করিতে প্রবৃত্ত হইলেন! তাহা হইলে আমিও তাঁহার অনুগমন করি।

বিদূষক—(পরিক্রমণপূর্ব্বক অগ্রসর করিয়া) আর্য্যে, আমি আপনার পথপ্রদর্শক হইব।

বসুভূতি—তাহা হইলে কি বৎসরাজ সত্যই অগ্নিতে প্রবেশ করিলেন! আমিও ত রাজপুত্রীর বিনাশ দেখিয়াছি; তাহা হইলে আমারও এই অগ্নিতেই শরীরটিকে আহুতি দান করা কর্ত্তব্য।

বাভ্রব্য—( সাশ্রুনেত্রে ) হায় মহারাজ! অকারণ কেন আপনি এই ভরতবংশকে সন্দেহতুলাতে আরোপিত করিলেন? অথবা, বিলাপ করিয়া প্রয়োজন কি? আমিও আমার ভক্তির অনুরূপ কার্য্য করি।

( সকলের অগ্নিতে প্রবেশ )

রাজা—( দক্ষিণ বাহুস্পন্দনের ভাব প্রদর্শন করিয়া ) এই অবস্থাতে আমার এইরূপ ফলের কিরূপে আশা করা যায়! ( অগ্রে অবলোকন করিয়া আনন্দ ও উদ্বেগের সহিত ) এই যে সাগরিকা অগ্নির নিকট দণ্ডায়মানা রহিয়াছেন। সুতরাং শীঘ্রই তাঁহাকে আশ্বস্ত করি।

( শৃঙ্খলাবদ্ধা সাগরিকার প্রবেশ )

সাগরিকা—( চতুর্দ্দিকে অবলোকন করিয়া ) হায়, হায়! চারিদিকে অগ্নি প্রজ্জ্বলিত হইয়াছে। অদ্য অগ্নিদেব আমার সমস্ত দুঃখের অবসান করিবেন।

রাজা—(শীঘ্র অগ্রসর হইয়া) হে প্রিয়ে! এখনও তুমি উদাসীন হইয়া রহিয়াছ কেন?

**Eng. Trans.** Vásava—I am not speaking for my own self. What more, cruel as I am, I have put Ságariká in chains, and she is in danger. So, my lord, it behoves thee to save her.

King—What! Madam! Ságariká in danger! Then I fly just for her rescue (I am come).

Vasubhuti—Why is Your Majesty taking to the folly of the moths for nothing?

Bábhravya—Noble Vasubhuti has spoken aright, my lord!

Jester—(Pulling the upper garment of the King) Please do not act rashly.

King—( Snatching away the skirt ) Out, you fool! when Ságariká is going to meet death, there is no use of surviving her (Ságariká is dying; am I to save my life still any longer?) (Enters the fire and appears to be suffocated with smoke)

Stop, stop, thou Fire! Withhold thy columns of (veiling) smoke. What is the use of spreading the encircling brilliancy of flames rising upwards? What will you do with your flames as destructive as that of the fire at the time of universal disso-

lution, when I have not been burnt to death by the fire of separation from my sweet-heart ? 16.

Vásava—Alas ! My lord has launched in this at the words of mine, an unfortunate creature. Then, let me also follow him.

Jester—(Going round and approaching) I shall lead the way of Your Ladyship.

Vasubhuti—What ! Then the King of Vatsa has precipitated himself into the fire ! After having witnessed the cruel fate of the Princess, it is fit for me to offer my body also to the fire here.

Bábhravya—( With tearful eyes ) O King, why have you thus imperilled needlessly the race of Bharata ? ( lit :— why have you caused the dynasty of Bharata to tremble in the balance ? ) Or what is the use of lamenting ? Let me show the proof of my fidelity.

King—(Gesticulating as if his right arm was throbbing) How can I expect the result of this (throbbing) under the present circumstances ? (Looking forward with joy and anxiety) Ah ! Here is Ságariká standing beside the fire. Then I shall just console her.

(Enter Ságariká in chains)

Ságariká—(Looking around) Alas ! Alas ! The blaze encompasses me on all sides ! Today the god of fire will put an end to all my sorrows.

King—(Approaching hastily) Oh, my dear ! Why are you still indifferent ?

सागरिका—( राजानं दृष्ट्वात्मगतम् ) कधं अज्जउत्तो ! ता एदं पेक्खिअ पुणोवि मे जीविदासा संवुत्ता । ( प्रकाशम् ) भट्टा ! परित्ताहि । (क)

(क) कथमार्यपुत्रः ! तदेतं प्रेक्ष्य पुनरपि जीविताशा संवृत्ता । भर्तः, परित्रायस्व ।

राजा—भीरु ! अलं भयेन—

मुहूर्तमपि सह्यतां बहुल एष धूमोद्गमो

( अग्रतोऽवलोक्य )

हहा ? धिगिदमंशुकं ज्वलति ते स्तनात् प्रच्युतम् ।

( विलोक्य )

मुहुः स्खलसि किं ?—कथं निगडसंयतासि ! द्रुतं

( परिकरं बद्ध्वा )

नयामि भवतीमितः प्रियतमेऽवलम्बस्व माम् ॥१७॥

( कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् ) अहो ! क्षणादपगतोऽयं मे सन्तापः । प्रिये ! समाश्वसिहि समाश्वसिहि—

व्यक्तं लग्नोऽपि भवतीं न धक्ष्यति हुताशनः ।

यतः सन्तापमेवायं स्पर्शस्ते हरति प्रिये ॥१८॥

( अक्षिणी समुन्मील्य निरीक्ष्य च ) अहो ! महदाश्चर्यम् !

क्वासौ गतो हुतवहस्तदवस्थमेत-

दन्तःपुरं ( वासवदत्तां दृष्ट्वा ) कथमवन्तिनृपात्मजेयम् !

वासवदत्ता—(राज्ञः शरीरं परामृशन्ती सहर्षम् ) दिट्ठिआ अक्खदसरीरो अज्जउत्तो ! (क)

राजा—बाभ्रव्यः एष—

बाभ्रव्यः—विजयतां महाराजः । देव ! दिष्ट्या वर्द्धसे ! पुनरुच्छ्वसिता स्मः ।

(क) दिष्ट्या अक्षतशरीरः आर्यपुत्रः ।

---

1. जौगिदाहिलासी समुप्पण्णो । 2. परित्ताअदु परित्ताअदु भट्टा । 3. क्वासौ प्रज्वलन्नी हुताशनः ? तदवस्थमेतदन्तःपुरम् ! कथमचिन्त्यरूपमेवम् ।

राजा— वसुभूतिरयं—

वसुभूतिः—देव ! दिष्ट्या वर्द्धसे !

राजा— वयस्य !—

विदूषकः—जेदु जेदु भवं । (क)

राजा—( विचिन्त्य सवितर्कम् ) स्वप्ने मतिभ्रमति किं न्विद-
मिन्द्रजालम् ॥१८॥

विदूषकः—भो ! मा संदेहं करेहि । इंदजालं ज्जेव्व एदं । भणिदं तेन दासीए पुत्तएण इंदआलिएण जधा अवस्सं ज्जेव्व मम एक्को खेलणओ देवेण पेक्खिदव्वोत्ति । ता तं ज्जेव्व एदं । (ख)

(क) जयतु जयतु भवान् ।

(ख) भो मा सन्देहं कुरु । इन्द्रजालम् एव एतत् । भणितं तेन दास्याः पुत्रकेन ऐन्द्रजालिकेन यथा अवश्यमेव मम एकः खेलनकः देवेन प्रेक्षितव्यः इति । तत् तदेवैतत् ।

जीविताशा प्रियतमस्य राज्ञः दर्शनेनेत्यर्थः । मुहूर्त्तमिति । अंशुकं वस्त्रम् । निगड़संयतासि शृङ्खलितासि ॥१७॥ व्यक्तमिति । लग्नः अपि हुताशनः वह्निः भवतीं न धक्ष्यति दग्धां करिष्यति । यतः यस्मात् ते तव अयं स्पर्शः सन्तापं हरते । तव स्पर्शस्य शीतलत्वात् अग्निः ते देहं दग्धुं न क्षमत्वम् । अग्नेः दाहकत्वं तव शीतलस्पर्शेन क्रियते । अग्नेरपि सन्तापम् अतिशयितस्य विरहतापस्य शैत्यमापादयितुं ते स्पर्शः यदा क्षमः, तदा अग्निः तव देहं दग्धुं सर्व्वथा न क्षम इति भावः ॥१८॥ क्वासाविति । तदवस्थम् सा एव अवस्था यस्य तत् पूर्व्ववत् अदग्धम् अन्तःपुरम् इति शेषः । अग्निपरीतत्वेऽपि अन्तःपुरस्य न किञ्चित् वैपरीत्यम् इति भावः । उच्छ्वसिताः जीविताः ॥१९॥

1. देव ! इदानीं प्रत्याज्जीविताः स्मः ।

2. विजयतां महाराजः ।

**Prose order**—এষ বহুল: ধূমোদ্গম: মুহূর্ত্তং সহ্যতাম্। হন্ত ধিক্! স্তনাৎ প্রভৃতং তে ইদম্ অংশুকং জ্বলতি। মুহুঃ কিং স্খলসি? কথং নিগড়সংযতাসি! প্রিয়তমে ভবতীম্ ইতঃ দ্রুতং নয়ামি। মাম্ অবলম্বস্ব ॥১৭॥

লগ্নঃ অপি হুতাশনঃ ভবতীং ন ধক্ষ্যতি (ইতি) ব্যক্তম্। প্রিয়ে! যতঃ অয়ং তে স্পর্শঃ সন্তাপং হরতি ॥১৮॥

অসৌ হুতবহঃ ক্ব গতঃ? এতৎ অন্তঃপুরং তদবস্থম্! কথম্! ইয়ম্ অবন্তিনৃপাত্মজা! এষ বাভ্রব্যঃ! অয়ঃ বসুভূতিঃ! বয়স্য! কিং স্বপ্নে মতিঃ ভ্রমতি? কিং নু ইদম্ ইন্দ্রজালম্! ॥১৯॥

**Beng. Trans.** সাগরিকা—( রাজাকে দেখিয়া স্বগত ) একি আর্য্যপুত্র যে! এখন ইঁহাকে দেখিয়া আমার জীবনের প্রতি আবার আশা জন্মিল। ( প্রকাশ্যে ) মহারাজ! রক্ষা করুন!

রাজা—ভীরু, ভয় করিও না—

এক মুহূর্ত্ত এই ধূমোদ্গম সহ্য কর। ( আগের দিকে লক্ষ্য করিয়া ) হায়! হায়! তোমার স্তন হইতে বিচ্যুত বস্ত্র প্রজ্বলিত হইতেছে। ( অবলোকন করিয়া ) তোমার পদবিক্ষেপ মুহুর্মুহুঃ স্খলিত হইতেছে কেন? তুমি কি শৃঙ্খলাবদ্ধ রহিয়াছে নাকি? ( কোমর বাঁধিয়া ) প্রিয়তমে! তুমি আমাকে ধর, আমি তোমাকে এইখান হইতে শীঘ্র লইয়া যাইব ॥১৭॥

( কণ্ঠ আলিঙ্গন করিয়া চক্ষু নিমীলিতকরতঃ স্পর্শসুখ অভিনয় করিয়া ) আহা! এক মুহূর্ত্তের মধ্যে আমার সন্তাপ দূরীভূত হইল। প্রিয়ে! আশ্বস্ত হও, আশ্বস্ত হও।

হে প্রিয়ে! অগ্নি ( তোমার দেহে ) লাগিয়া থাকিলেও তোমাকে দগ্ধ করিবে না। কারণ তোমার এই স্পর্শ আমার সন্তাপ দূর করিতেছে ॥১৮॥

( অক্ষি উন্মীলিত করিয়া করিয়া পুনরায় নিরীক্ষণকরতঃ ) অহো কি আশ্চর্য্য! কোথায় সেই প্রজ্বলিত অগ্নি? অন্তঃপুর ত সেই অবস্থায় রহিয়াছে! একি! এ যে অবন্তিরাজকন্যা!

বাসবদত্তা—( রাজার শরীরে হাত বুলাইয়া সহর্ষে ) সৌভাগ্যক্রমে আর্য্যপুত্র অক্ষত-শরীরে বিদ্যমান রহিয়াছেন!

রাজা—এই যে বাভ্রব্য!

বাভ্রব্য—মহারাজের জয় হউক! মহারাজের অভ্যুদয় লাভ হইয়াছে! আমরাও পুনর্জীবিত হইলাম।

রাজা—এই যে বসুভূতি!

বসুভূতি—দৈববশে মহারাজের অভ্যুদয় হইয়াছে!

রাজা—বয়স্য!

বিদূষক—মহারাজের জয় হউক!

রাজা—( চিন্তা করিয়া সন্দেহের সহিত ) মন কি আমার স্বপ্নে ভ্রমণ করিতেছে! অথবা ইহা কি ইন্দ্রজাল! ।১৬।

বিদূষক—সন্দেহ করিবেন না। ইহা ইন্দ্রজালই বটে। সেই দাসীপুত্র ঐন্দ্রজালিক বলিয়াছিল, "মহারাজকে আমার আর একটি খেলা দেখিতেই হইবে।" ইহা তাই।

**Eng. Trans.** Ságariká—(Seeing the King—to herself) Ah! the King! The sight of him inspires me once more with the hope of life. (Aloud) Save me, Sire!

King—Fear not, timid girl! Bear one moment these enveloping smokes. ( Looking forward ) Alas! your garment dropped from your breast is ablaze. ( Looking ) Why are you stumbling at every step? Are you then in chains? (Girding up the loins) Dearest! Cling to me, I shall remove you quick from this place. 17.

(Embraces her neck and closing the eyes feels the pleasure of her touch) Ah! my affliction is off at once. My dear, be composed.

Oh, dear, the fire though clinging (to you) will not burn your person surely, as this (cooling) touch of yours is removing my affliction. 18.

(Opening the eyes and looking around) What a wonder is this! Where are the flames? The inner apartment is as it was before. (Seeing Vásavadattá) Why! Here is the Princess of Avanti!

Vásava—(Touching the King's body and joyfully) Fortunately my lord is without any bodily injury.

King—This is Bábhravya here !

Bábhravya—Glory be to the great King ! Your Majesty is now attended with prosperity. We are also restored to our life.

King—Here is Vasubhuti too !

Vasubhuti—Your Majesty is attended with prosperity fortunately.

King—My friend !

Jester—Glory be to Your Majesty !

King—(Thinking—with doubt) Is my mind moving in a dream, or is it an illusion ! 19.

Jester—There is no doubt about (the latter). That it is an illusion forsooth ! That harlot's son, magician said that Your Majesty must witness one of his tricks. This is nothing but that.

राजा—देवि ! इयं त्वद्वचनादस्माभिरिहानीता सागरिका[1] ।

वासवदत्ता—(विहस्य[2]) अज्जउत्त ! जाणिदं मे सव्वम्[3] । (क)

वसुभूतिः—( सागरिकां दृष्ट्वापवार्य ) बाभ्रव्य ! संदृशीयं राजपुत्र्याः ।

बाभ्रव्य—अमात्य ! ममाप्येतदेव मनसि वर्त्तते ।

वसुभूतिः—( प्रकाशं राजानमुद्दिश्य ) देव ! कुत इयं कन्यका ?

राजा—देवी जानाति ।

वसुभूतिः—देवी कुतः पुनरियं कन्यका ?

वासवदत्ता—अमच्च ! एसा क्खु साअरादो पाविदेत्ति

(क) आर्य्यपुत्र, ज्ञातं मे सर्व्वम् ।

1. कन्यका । 2. सस्मितम् । 3. अज्जउत्त आणिदं मए ।

भणिअ अमच्चजोअंधराअणेण मम हत्थे णिक्खित्ता। अदो ज्जेव्व साअरिआत्ति सद्दाईअदि। (क)

राजा—(स्वगतम्) कथं यौगन्धरायणेन न्यस्ता! कथमसौ मामनिवेद्य किञ्चित् करिष्यति!

वसुभूतिः—(अपवार्य) बाभ्रव्य! यथा सुसदृशी वसन्तकस्य कण्ठे रत्नमाला अस्या अपि सागरात् प्राप्तिः तथा व्यक्तं सिंहलेश्वरस्य दुहिता रत्नावलीयम्। (इत्युपसृत्य—प्रकाशम्) आयुष्मति! रत्नावलि! राजपुत्रि! त्वमीदृशीमवस्थां गतासि[1]!

सागरिका—(वसुभूतिं दृष्ट्वा सास्रम्[2]) कहं अमच्चो वसुभूदो! (ख)

वसुभूतिः—हा हतोऽस्मि मन्दभाग्यः! (इति भूमौ पतति)

सागरिका—हा हदह्मि मंदभाइणी! हा ताद! हा अम्ब! कहिं सि? देहि मे पडिवअणं। (इत्यात्मानं पातयन्ती मोहमुपगता[3]) (ग)

वासवदत्ता—(ससम्भ्रमम्) कंचुइ! इयं सा मम बहिणिआ रअणावली। (घ)

बाभ्रव्यः—देवि! इयमेव सा।

(क) अमात्य, एसा खलु सागरात् प्राप्तेति भणित्वा अमात्ययौगन्धरायणेन मम हस्ते निक्षिप्ता। अतएव सागरिकेति शब्द्यते।

(ख) कथममात्यो वसुभूतिः!

(ग) हा हतास्मि मन्दभागिनी! हा तात! हा अम्ब! कुत्रासि? देहि मे प्रतिवचनम्। (घ) कञ्चुकिन्! इयं सा मम भगिनी रत्नावली?

1. आयुष्मति, न खलु राजपुत्री रत्नावली त्वमेनामवस्थामुपगता! 2. विलोक्य। 3. इति वसुभूतेरुपरि पतन्ती मोहमुपगता।

**वासवदत्ता—( रत्नावलीमालिङ्ग्य ) बहिणि ! समस्सस, समस्सस । (क)**

**राजा—कथमुदात्तवंशप्रभवस्य सिंहलेश्वरस्य विक्रमबाहोरात्मजेयम् !**

(क) भगिनि ! समाश्वसिहि, समाश्वसिहि ।

**Beng. Trans.** দেবি ! এই যে আপনার কথায় সাগরিকাকে এখানে আনিয়াছি।

বাসবদত্তা—( হাসিয়া ) আর্য্যপুত্র ! আমার সমস্ত জানা আছে।

বসুভূতি—( সাগরিকাকে দেখিয়া জনান্তিকে ) বাভ্রব্য ! এই বালিকা ত ঠিক আমাদের রাজকন্যার ন্যায় দেখিতে !

বাভ্রব্য—অমাত্য, আমারও মনে তাই হয়।

বসুভূতি—( প্রকাশ্যে রাজাকে লক্ষ্য করিয়া ) মহারাজ। এই কন্যাটি কোথা হইতে আসিয়াছেন ?

রাজা—মহিষী জানেন।

বসুভূতি—দেবি, এই কন্যাকে কোথা হইতে পাওয়া গিয়াছে ?

বাসবদত্তা—অমাত্য, ইহাকে সাগর হইতে পাওয়া গিয়াছে; তাই বলিয়া অমাত্য যৌগন্ধরায়ণ আমার হস্তে নিক্ষেপ করিয়াছেন। সেই হইতে ইহাকে 'সাগরিকা' বলিয়া ডাকা হয়।

রাজা—( স্বগত ) কি ! যৌগন্ধরায়ণ রাখিয়া গিয়াছেন ! তিনি কি আমাকে না জানাইয়া কিছু করিবেন !

বসুভূতি—( জনান্তিকে ) বাভ্রব্য ! যেরূপ বসন্তকের কণ্ঠে স্থিত রত্নমালা ( আমাদের রত্নমালার ) সুসদৃশ, সেইরূপ ইঁহারও সাগর হইতে প্রাপ্তি সুসঙ্গত। সুতরাং নিশ্চয়ই ইনি সিংহলরাজকন্যা রত্নাবলী ! ( অগ্রসর হইয়া প্রকাশ্যে ) আয়ুষ্মতি ! রত্নাবলি ! রাজপুত্রি ! তুমিও এইরূপ অবস্থায় পতিত হইয়াছ !

সাগরিকা—( বসুভূতিকে দেখিয়া সাশ্রুনেত্রে ) এই যে অমাত্য বসুভূতি !

বসুভূতি—হায় ! হায় ! আমি কি মন্দভাগ্য ! ( ভূমিতে পতন )

সাগরিকা—হায় ! হায় ! আমি কি মন্দভাগিনী ! হা পিতঃ ! হা মাতঃ ! আপনারা কোথায় ? আমাকে প্রত্যুত্তর দিন। ( আপনাকে পাতিত করিলেন ও মোহ )

বাসবদত্তা—( সসম্ভ্রমে ) কঞ্চুকিন্ ! এই কি সেই আমার ভগিনী রত্নাবলী !

বাভ্রব্য—দেবি ! হাঁ, ইনিই তিনি।

বাসবদত্তা—( রত্নাবলীকে আলিঙ্গন করিয়া ) ভগিনি ! আশ্বস্ত হও, আশ্বস্ত হও।

রাজা—এই কি সেই মহাকুলসম্ভূত সিংহলরাজ বিক্রমবাহুর কন্যা !

**Eng. Trans.** O Queen ! Here is Ságariká brought in obedience to your words.

Vásava—(Smiling) I am sensible to all these, my lord !

Vasubhuti—( Sees Ságariká and aside ) Bábhravya, the damsel is wonderfully like the Princess.

Bábhravya—O Minister ! So it strikes my mind as well.

Vasubhuti—(Aloud to the King) Whence is this maiden, my lord ?

King—The Queen knows everything.

Vasubhuti—O Madam ! Whence is this damsel ?

Vásava—O Minister ! Yaugandharáyana told me that she had been rescued from the sea and then presented her to me. Hence she has been designated 'Ságarika' (The ocean-maid).

King—( To himself ) What ! Deposited by Yaugandhará-yana ! Would he do anything without letting me know of it ?

Vasubhuti—(Aside) Bábhravya ! As similar is the necklace in the neck of Vasantaka, so is her rescue from the sea consistent. So she must be Ratnávali, the daughter of Vikramabáhu, the King of Simhala. (Approaching and aloud) Oh, long-lived Princess Ratnávali ! Are you fallen in such a miserable plight !

Ságariká—( Sees Vasubhuti and sheds tears ) Ha ! the Minister Vasubhuti !

Vasubhuti—Alas ! Alas ! I am undone, unfortunate as I am. (Falls on the ground)

Ságariká—Alas ! I perish, an ill-fated person that I am ?

Oh my father ! Oh, mother ! Where are you ? Give me reply. (Falls and faints)

Vásava—(In a hurry) Oh chamberlain ! Is this my sister Ratnávali ?

Bábhravya—It is, Madam !

Vásava—(Embracing Ratnávali) Sister ! Be composed.

King—Is this the daughter of Vikramabáhu, born of high family—the sovereign of Simhala !

विदूषकः[1]—रअणावलिं पेक्खिअ पढ़मे एव्व जाणिद[2] मए ण क्खु सामण्णजणस्स ईदिसो परिच्छदोत्ति। (क)

वसुभूतिः—( उत्थाय ) राजपुत्रि ! समाश्वसिहि, समाश्वसिहि। नन्वियं ज्यायसी ते भगिनी दुःखमास्ते। तत् परिष्वजस्वैनाम्।

रत्नावली—( समाश्वस्य राजानं तिर्यगवलोक्य स्वगतम् ) किदावराहा क्खु अहं देवीए ण सक्कणोमि मुहं दंसिदुं। ( इत्यधोमुखी तिष्ठति ) (ख)

वासवदत्ता—(सास्रं बाहू प्रसार्य ) एहि अदिणिट्ठुरे ! दाणिं पिअबहिणिए ! सिणेहं दंसेहि। ( इति कण्ठे गृह्णाति ) (ग)

(क) रत्नावलीं प्रेक्ष्य प्रथम एव ज्ञातं मया न खलु सामान्यजनस्य ईदृशः परिच्छद इति।

(ख) कृतापराधा खलु अहं देव्यै न शक्नोमि मुखं दर्शयितुम्।

(ग) एहि अतिनिष्ठुरे ! इदानीं प्रियभगिनि ! स्नेहं दर्शय।

1. ( रत्नमालां स्पृष्ट्वा स्वगतम् )
2. पढ़मं ज्जेव्व मए जाणिदं।

( रत्नावली स्खलितं नाटयति[1] )

वासवदत्ता—( अपवार्य ) अज्जउत्त ! लज्जेमि अहं इमिणा अत्तणो णिसंसत्तणेण । ता लहुं अवणेहि से एदं बंधणं । (क)

राजा—( सपरितोषम् ) यथाह देवी । ( इति सागरिकाया बन्धनमपनयति[2] )

वासवदत्ता—अज्जउत्त ! अमच्चजोअंधराअणेण एत्तिअ कालं दुज्जणीकिदह्मि । जेण जाणंतेण वि ण मे णिवेदिदं । (ख)

( ततः प्रविशति यौगन्धरायणः )

यौगन्धरायणः—

देव्या मद्वचनात् यथामुपगतः[3] पत्युर्वियोगस्तदा[4]

सा देव्यन्यकलत्रसंघटनया दुःखं परं प्रापिता ।

तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः

सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ॥२०॥

अथवा किं क्रियते ? ईदृशमत्यन्तमाननीयेष्वपि निरनुरोधवृत्ति स्वामिभक्तिव्रतम् । (निरूप्य[5] ) अयं देवो महाराजः[6] ! यावदुपसर्पामि । ( उपसृत्य ) जयतु जयतु देवः । ( पादयोर्निपत्य ) देव ! क्षम्यतां यन्मयानिवेद्य कृतम्[7] ।

(क) आर्यपुत्र ! लज्जे अहम् अनेन आत्मनो नृशंसत्वेन । तल्लघु अपनय अस्याः इदं बन्धनम् । (ख) आर्यपुत्र ! अमात्ययौगन्धरायणेन एतावत्कालं दुर्जनीकृतास्मि, येन जानतापि न मे निवेदितम् ।

1. ( इति कण्ठे गृह्णाति ; रत्नावली स्खलितं नाटयति ) 2. (इति तथा करोति) । 3. मद्वचनाद् यदाभ्युपगतः । 4. मया । 5. विलोक्य । 6. अयं देवः । 7. मया देवस्य अनिवेद्य ।

सामान्यजनस्य साधारणजनस्य। कृतापराधा कृतदोषा राज्ञा सह सञ्जातप्रीतित्वाद् इत्यर्थः। अतिनिष्ठुरे एतावत्कालं स्वनामाप्रकटय्य राजान्तःपुरे स्थितत्वात् रत्नावल्याः, निष्ठुरत्वम् इति भावः। देव्या इति। देव्याः वासवदत्तायाः पत्युः वत्सराजात् इत्यर्थः। वियोगः विरहः मद्वचनात् मम वचनमवलम्ब्य प्रथां प्रसिद्धिम् उपगतः। मया सागरिका वासवदत्तासमीपे न्यस्ता। तस्यां सागरिकायां राज्ञः सञ्जातप्रीतित्वात् तदेकमनस्कतया च वासवदत्तायाः वत्सराजात् सर्व्वथा विरहः सञ्जात एव इति यौगन्धरायणस्य आशयः। सा देवी वासवदत्ता अन्यकलत्रसंघटनया अन्यत् अपरं यत् कलत्रं स्त्री तया राज्ञः संघटनया संयोगेन सागरिकया इत्यर्थः। सा वासवदत्ता परं भृशं दुःखं प्रापिता विषयीकृता। इदानीं तस्याः वासवदत्तायाः अयं प्रभोः वत्सराजस्य जगत्स्वामित्वलाभः जगति सार्व्वभौमनृपतेः पदलाभः सागरिकाविवाहेनेत्यर्थः। प्रीतिम् आनन्दं करिष्यति इति सत्यं तथापि प्रीत्युत्पत्तौ अपि लज्जया वदनं दर्शयितुं न शक्नोमि राजानुमतिमगृहीत्वा एव मया अभिप्रेतस्य सम्पादितत्वादित्यर्थः ॥२०॥ अत्यन्तमाननीयेषु अत्यन्तसत्कारणीयेषु प्रभुष्वित्यर्थः। स्वामिभक्तिव्रतम् प्रभुभक्तिनियमः निरनुरोधवृत्ति अनुरोधस्य छन्दानुवर्त्तनस्य वृत्तिः कार्य्यं वर्त्तनं निर् नास्ति अनुरोधवृत्तिः यस्मिन् तत्। स्वामिहितार्थं क्रियमाणे कार्य्ये क्वचित् कदाचिद् वा प्रभोः चित्तवृत्तेः अननुगमनं न दोषाय इति भावः।

**Prose order.** तदा मद्वचनात् देव्याः पत्युः वियोगः प्रथाम् उपगतः ; सा देवी अन्यकलत्रसंघटनया परं दुःखं प्रापिता ; अयं प्रभोः जगत्स्वामित्वलाभः तस्याः प्रीतिं करिष्यति (इति) सत्यं ; तथापि लज्जया वदनं दर्शयितुं नो शक्नोमि ॥२०॥

**Beng. Trans.** বিদূষক—( স্বগত ) রত্নাবলী দেখিয়াই আমি প্রথমে মনে বুঝিতে পারিয়াছিলাম যে ইহা সাধারণ লোকের অলঙ্কার হইতে পারে না।

বসুভূতি—(উঠিয়া) রাজপুত্রি! আশ্বস্ত হউন, আশ্বস্ত হউন। এই যে আপনার জ্যেষ্ঠা ভগিনী ( মনে ) দুঃখ পাইতেছেন। ইঁহাকে আলিঙ্গন করুন।

রত্নাবলী—(আশ্বস্ত হইয়া রাজাকে তির্য্যগ্‌ভাবে অবলোকন করতঃ স্বগত) আমি অপরাধ করিয়াছি। (সেইজন্য) দেবীর নিকট মুখ দেখাইতে পারিতেছি না। (অধোমুখে অবস্থান)

বাসবদত্তা—( সজলনেত্রে বাহুপ্রসারণ করিয়া ) অতিনিষ্ঠুরে! ইদানীং আমার প্রিয়-ভগিনি! এস, স্নেহ প্রদর্শন কর। ( কণ্ঠালিঙ্গন )

( রত্নাবলীর পদস্খলন )

বাসবদত্তা—( জনান্তিকে ) আর্য্যপুত্র ! আমি নিজের নৃশংসতার জন্য অত্যন্ত লজ্জিত হইতেছি। এখন শীঘ্রই ইহার বন্ধন খুলিয়া দিন।

রাজা—( পরিতোষের সহিত ) দেবী যাহা বলেন। ( সাগরিকার বন্ধনাপনয়ন )

বাসবদত্তা—আর্য্যপুত্র ! অমাত্য যৌগন্ধরায়ণ এতাবৎকাল আমাকে দুর্জ্জন করিয়াছেন ; যেহেতু তিনি নিজে জানিয়াও আমাকে জানান নাই।

( যৌগন্ধরায়ণের প্রবেশ )

যৌগন্ধরায়ণ—আমার কথামত দেবী বাসবদত্তার পতিবিরহ প্রসিদ্ধি লাভ করিয়াছে। অন্য স্ত্রীলোকের সহিত ( মহারাজের ) সংসর্গহেতু দেবী অনেক দুঃখও পাইয়াছেন। মহারাজের এই জগতের প্রভুত্বলাভ এখন তাঁহার ( বাসবদত্তার ) আনন্দের কারণ হইবে সত্য ; কিন্তু তথাপি আমি লজ্জায় মুখ দেখাইতে পারিতেছি না ॥২০॥

অথবা, কি করা যায় ? প্রভুভক্তি-ব্রত বিদ্যমান থাকিলে অত্যন্ত মাননীয় ব্যক্তিগণের মতানুযায়ী কার্য্য না করিলেও চলে ( অর্থাৎ মাননীয় ব্যক্তিগণের মতানুযায়ী কার্য্য না করিলেও কোন দোষের হয় না ; যেহেতু সেইরূপ লঙ্ঘন প্রভুভক্তিমূলক )। এখন অগ্রসর হই। ( অগ্রসর হইয়া ) মহারাজের জয় হউক ! ( পদতলে পড়িয়া ) মহারাজ, আপনাকে না জানাইয়া যাহা কিছু করিয়াছি, তজ্জন্য আমাকে ক্ষমা করুন।

**Eng. Traps.** Jester—(Aside) At the very first sight of the necklace I came to the conclusion that this was a property of no ordinary person,

Vasubhuti—( Rising ) Oh Princess ! Be composed. See your elder sister grieves ! So embrace her (and console).

Ratnávali—(Becomes composed and looking at the King askance—aside) I have given offence to her. I cannot look her in the face again. (Looks down)

Vásava—(Holding out her hands—with tears) Come hither, Oh unrelenting girl ! Come now, my endeared sister ! Be affectionately disposed towards me. ( Clasps her round the neck )

(Ratnávali gesticulates stumbling)

Vásava—(Aside) My lord ! I am ashamed of my cruel nature. Quickly undo these bonds about her (person).

King—(With joy) As Your Ladyship says. (Removes the bonds of Ságariká)

Vásava—My lord, Yaugandharáyana, the minister, has made me wicked so long, as he, knowing even the truth himself, did not let me know of it.

(Enter Yaugandharáyana)

Yaugandha.—It is due to my words that the (news of) seperation of the Queen from her husband has been so current (prominent). She has also been subjected to the utmost suffering due to his (King's) union with another wife. Though the attainment of the paramount monarchy of her husband will please her now, yet through shame I am not able to show my face (to her). 20.

Or, what can be done ? Such a vow of fidelity towards one's master entails the attitude of disobeying (not following the humour of) even very respectable persons. (Looking) Here is His Majesty. I shall approach him. (Approaching) Glory to Your Majesty ! (Falling at his feet) Please excuse, Your Majesty, what I have done without informing you.

राजा—[1]कथय किमनिवेद्य कृतम् ।

यौगन्ध—करोत्वासनपरिग्रहं देवः । सर्व्वं विज्ञापयामि ।

( सर्व्वे राज्ञा सह यथास्थानमुपविशन्ति )

यौगन्ध—देव ! श्रूयताम् । येयं सिंहलेश्वरस्य दुहिता सा सिद्धेनादिष्टा—यथा योऽस्याः पाणिग्रहणं करिष्यति स सार्व्व-

1. यौगन्धरायण, तत् कथय किमनाख्याय त्वया कृतम् ।

भौमो राजा भविष्यति। ततस्तत्प्रत्ययादस्माभिः [1]स्वामिनोऽर्थे बहुशः प्रार्थ्यमानेनापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता—

राजा—तदा किम् ?

यौगन्ध—(सलज्जम्) तदा लावाणकेन वह्निना देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः।

राजा—यौगन्धरायण ! ततः परं श्रुतं मया। अथेयं देवीहस्ते किमित्यनुचिन्त्य स्थापिता ?

विदूषकः—भो [2]एदस्स अभिप्पाओ मया जाणिदो। अणाचक्खिदं वि एदं जाणीअदि एव्व जह अंतेउरगदं एदं जाव अंतेउरगदो देवो सुहेण पेक्खिस्सदि। (क)

राजा—यौगन्धरायण ! [3]गृहीतस्तेऽभिप्रायो वसन्तकेन ?

यौगन्ध—यदाज्ञापयति देवः।

राजा—ऐन्द्रजालिकवृत्तान्तोऽपि मन्ये त्वत्प्रयोग एव ?

यौगन्ध—अन्यथान्तःपुरे बद्धायाः अस्याः कुतो देवेन दर्शनम् ? अदृष्टायाश्च वसुभूतेः कुतः परिज्ञानम् ? (विहस्य) परिज्ञातायाश्च भगिन्याः सम्प्रति यथा करणीयं तत्र देवी प्रमाणम्।

(क) भोः, एतस्य अभिप्रायः मया ज्ञातः। अनाख्यातमपि एतद् ज्ञायते एव यथा अन्तःपुरगतां एतां यावद् अन्तःपुरगतो देवः सुखेन प्रेक्षिष्यते।

1. स्वाम्यर्थम्। 2. भो अणाचक्खिदं वि एदं जाणीअदि जधा अन्तेउरगदा सुहेण दे णअणपधं गमिस्सदित्ति। 3. गृहीताभिप्रायोऽसि।

वासवदत्ता—( सस्मितम् ) अज्ज अमच्च ! फुडं ज्जेव्व किं ण भणासि जह अज्जउत्ते पडिवादेहि रअणावलिं त्ति। ( इति रत्नावलीं स्वकीयैराभरणैरलङ्कृत्य हस्ते गृहीत्वा राजानमुपसृत्य[1] ) देव ! पडिच्छ एदं रअणावलिं। (क)

राजा—( सहर्षं हस्तौ प्रसार्य ) को देव्याः प्रसादो न बहुमन्यते ? ( इति सागरिकां गृह्णाति )

वासवदत्ता—अज्जउत्त ! दूरे क्खु एदाए [2]णादिउलं। ता तह करेदु जह बंधुजणं ण सुमरेदि। ( इति समर्पयति ) (ख)

राजा—यथाज्ञापयति देवी।

विदूषकः—( सहर्षं नृत्यति ) ही ही भो ! जअदु जअदु भवं ! पुहवी क्खु दाणिं हत्थे गदा पिअवअस्सस्स। (ग)

(क) आर्य्य अमात्य ! स्फुटमेव किं न भणसि—यथा आर्य्यपुत्रे प्रतिपादय रत्नावलीमिति। देव ! प्रतीच्छ एतां रत्नावलीम्। (ख) आर्य्यपुत्र ! दूरे खलु एतस्याः ज्ञातिकुलम्। तत् तथा करोतु यथा बन्धुजनं न स्मरति। (ग) ही ही भोः ! जयति जयति भवान् ! पृथिवी खलु इदानीं हस्ते गता प्रियवयस्यस्य।

**Beng. Trans.** রাজা—বলুন, আপনি আমাকে না জানাইয়া কি করিয়াছেন ?
যৌগন্ধ—মহারাজ ! আসন পরিগ্রহণ করুন। আপনাকে সমস্ত জানাইতেছি।

( সকলের রাজার সহিত যথাস্থানে উপবেশন )

যৌগন্ধ—মহারাজ শ্রবণ করুন। সিংহলরাজের কন্যা সিদ্ধকর্ত্তৃক আদিষ্ট হইয়াছিলেন যে যিনি ইঁহার পাণিগ্রহণ করিবেন, তিনি সার্ব্বভৌম রাজা হইবেন। আমরাও

---

1. राजा—( विहस्य ) परिज्ञातायाय भगिन्या...तथा देवी प्रमाणम्। वास—अज्जउत्त ! फुडं ज्जेव्व......जह पडिवादेहि मए रअणावलिं त्ति। विदू—भोदि ! सुट्ठु तुए जाणिदो पिअवअस्सस्स अभिप्पाओ। वास—( हस्तौ प्रसार्य ) एहि रअणावलि एहि, दाणिं किंपि दे मे बहिणिआअणुरूवं होदु। ( इति रत्नावलीं स्वकीयैराभरणैः ......etc.) 2. पिदुउलं।

তাঁহাদের ( সিদ্ধদের ) কথায় বিশ্বাস স্থাপন করিয়া প্রভুর জন্য বহুবার সিংহলেশ্বরের নিকট রত্নাবলীকে প্রার্থনা করিলেও, সিংহলেশ্বর দেবী বাসবদত্তার মনোদুঃখ এড়াইবার জন্য ( রত্নাবলীকে ) যখন দিলেন না--

রাজা—তারপর কি হইল ?

যৌগন্ধ—( সলজ্জভাবে ) তখন লাবাণক গ্রামে দেবী বাসবদত্তা অগ্নিতে দগ্ধ হইয়াছেন এই প্রবাদ প্রচার করিয়া তাঁহার ( সিংহলেশ্বরের ) নিকট বাভ্রব্যকে প্রেরণ করা হইল।

রাজা—যৌগন্ধরায়ণ ! তারপর আমি শুনিয়াছি। দেবী বাসবদত্তার হস্তে রত্নাবলীকে কি চিন্তা করিয়া স্থাপিত করিয়াছিলেন ?

বিদূষক--আমি ইঁহার অভিপ্রায় জানিয়াছি। না বলিলেও এইরূপ জানা যাইতেছে যে অন্তঃপুরস্থিতা তাঁহাকে ( রত্নাবলীকে ) মহারাজ অন্তঃপুরে যাইয়া সহজেই দেখিতে পাইবেন।

রাজা—যৌগন্ধরায়ণ ! বসন্তক আপনার অভিপ্রায় ঠিক বুঝিতে পারিয়াছে ত ?

যৌগন্ধ—মহারাজ যাহা বলেন !

রাজা—আমার মনে হয় ঐন্দ্রজালিকের ব্যাপারও আপনার কৌশল-প্রয়োগ !

যৌগন্ধ—তাহা না হইলে অন্তঃপুরে আবদ্ধা ইঁহার ( রত্নাবলীর ) সহিত মহারাজের সাক্ষাৎকার কিরূপে সম্ভবপর হইত ? বসুভূতিই বা না দেখিয়া কিরূপে ইঁহাকে চিনিতেন ? ( হাসিয়া ) ভগিনীর সহিত পরিচয় হইবার পর এখন যাহা কর্তব্য তদ্বিষয়ে দেবীই প্রমাণ।

বাসবদত্তা—( সহাস্যে ) আর্য্য অমাত্য। পরিষ্কার করিয়া বলিতেছেন না কেন যে, আর্য্যপুত্রকে রত্নাবলী সমর্পণ করুন। ( রত্নাবলীকে স্বকীয় আভরণ দ্বারা অলঙ্কৃত করিয়া হস্তগ্রহণপূর্ব্বক রাজার নিকট অগ্রসর হইয়া ) মহারাজ ! এই রত্নাবলীকে গ্রহণ করুন।

রাজা—( সহর্ষে হস্ত প্রসারিত করিয়া ) দেবীর কোন্ অনুগ্রহকে না আদরের সহিত গ্রহণ করা হয় ? ( সাগরিকাকে গ্রহণ )

বাসবদত্তা—আর্য্যপুত্র ! ইঁহার জ্ঞাতিকুল দূরে রহিয়াছেন। আপনি এইরূপ আচরণ করিবেন যাহাতে এ অবস্থায় বন্ধুজনকে সে ( রত্নাবলী ) স্মরণ না করে।

রাজা—দেবীর যাহা আদেশ।

বিদূষক—( সহর্ষে নৃত্য করিয়া ) হা হা ! ভোঃ, আপনার জয় হউক ! এখন সত্যই সমগ্র পৃথিবী প্রিয়বয়স্যের হস্তগত হইল।

**Eng. Trans.** King—Let me know what you have done without my knowledge.

Yaugandha.—Please Your Majesty, be seated, and I shall relate to you everything. The daughter of the King of Simhala was prophesied by the Siddhas that he who would marry her would be a paramount monarch. We, too, having confidence in that, applied on behalf Your Majesty, to the King of Simhala, who with the object of avoiding the mental uneasiness of the Queen, was unwilling to give her (Ratnávali) (in marriage with you)--

King --What then ?

Yaugandha.—(Bashfully) Then a rumour was set a-foot that the Queen had been burnt in the fire of Lávánaka and Bábhravya was sent to him (the King of Simhala).

King—Oh Yaugandharáyana ! I have heard what ensued. But with what object in view, did you place her in the hands of the Queen ?

Jester—Oh, I can guess his object. It can be guessed easily, even untold, that Your Majesty when present in the inner apartment would see her there in the harem easily.

King—Oh Yaugandharáyana ! Has not your object been guessed correctly by Vasantaka ?

Yaugandha.—As Your Majesty says.

King—I think you had some concern in the affairs of the conjuror also ?

Yaugandha.—Otherwise how could Your Majesty catch sight of her ( Ratnávali ) imprisoned in the inner apartment ? And how else could Vasubhuti recognize her without seeing her ? (Laughing) Now, when the sister has been recognized, Her Majesty is the sole authority as to what would be done next.

Vasava.—(Smiling) Worthy Minister ! Why don't you say

clearly that Ratnávali should be given to my husband. (Decorating Ratnávali with her own ornaments and approaching the King) My lord ! Accept this Ratnávali.

King—( Stretching out his hand with joy ) What favour of the Queen is not prized most ! (Takes Ságariká by hand)

Vásava.—My lord ! Her relatives are far away from her. So treat her in a manner that she may never have occasion to remember them (with longing).

King—As Your Majesty commands.

Jester.—( Dances with joy ) Ha ! Ha ! Ah ! Victory to you ! The whole world is now in the possession of my dear friend.

वसुभूतिः—[1]राजपुत्रि ! वासवदत्तां प्रणामेनार्चय ।

( रत्नावली तथा करोति )

बाभ्रव्यः—[2]देवि ! स्थाने देवीशब्दमुद्वहसि !

( वासवदत्ता रत्नावलीमालिङ्ग्य देवीशब्देन प्रसादं करोति )

बाभ्रव्यः—इदानीं सफलपरिश्रमः संवृत्तः ।

यौगन्ध—देव ! तदुच्यतां किं ते भूयः प्रियमुपकरोमि ?

राजा—किमतःपरमपि प्रियमस्ति ! यतः—

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले

सारं सागरिका [4]तथा च भुवनप्राप्त्येकहेतुः प्रिया ।

देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः

किं नास्ति त्वयि सत्यमात्यवृषभे यस्मै करोमि स्पृहाम्[5] ॥२१॥

तथापीदमस्तु—

---

1. आयुष्मति, स्थाने देवीशब्दमुद्वहसि ! 2. न दृश्यते क्वचित् । 3. इदानीं सफलपरिश्रमोऽस्मि संवृत्तः । 4. ससागरमहीप्राप्त्येकहेतुः । 5. कि नामास्ति विधेयमत्र भुवने यस्मिन् करोमि स्पृहाम् ?

( भरतवाक्यम् )

उर्व्वीमुद्दामसस्यां जनयतु विसृजन् वासवो वृष्टिमिष्टा-
मिष्टैस्त्रैविष्टपानां विदधतु विधिवत् प्रीणनं विप्रमुख्याः।
आकल्पान्तं च भूयात् समुपचितसुखः सङ्गमः सज्जनानां
निःशेषं यान्तु शान्तिं पिशुनजनगिरो दुर्ज्जया वज्रलेपाः ॥२२॥

( इति निष्क्रान्ताः सर्व्वे )

## इति ऐन्द्रजालिको नाम चतुर्थोऽङ्कः

## ॥ अवसिता रत्नावली नाटिका ॥

नीत इति। विक्रमबाहुः सिंहलराजः आत्मसमतां आत्मतुल्यतां परिणयसम्बन्धेन इत्यर्थः। नीतः प्रापितः। उर्व्वीतले भूतले सारं रत्नभूता भुवनप्राप्त्यै कहेतुः समग्र-पृथिवीलाभस्य एकैव कारणभूता प्रिया इयं सागरिका प्राप्ता। देवी वासवदत्ता भगिनी-लाभात् सागरिकालाभात्। वासवदत्तायाः मातुलस्य सिंहलेश्वरस्य कन्या रत्नावली वासव-दत्तायाः भगिनीत्यर्थः। प्रीतिम् उपागता प्राप्ता। कोशलाः जिताः। त्वयि अमात्यवृषभे मन्त्रिश्रेष्ठे यौगन्धरायणे इत्यर्थः, सति विद्यमाने किं नास्ति यस्मै स्पृहां वासनां करोमि ? सर्व्वमेव मम वर्त्तते येभ्यः स्पृहयामीत्यर्थः ॥२१॥ उर्व्वीमिति।, वासवः इन्द्रः इष्टाम् अभीप्सिताम् प्रचुराम् इत्यर्थः। वृष्टिं विसृजन् वर्षन् उर्व्वीं पृथिवीम् उद्दामसस्यां उद्दामं बन्धरहितं प्रभूतम् इति यावत् सस्यं धान्यं यस्यां ताम् प्रभूतधान्यसम्पन्नां जनयतु करोतु। विप्रमुख्याः ब्राह्मणश्रेष्ठाः त्रैविष्टपानां त्रिविष्टपः स्वर्गः तत्र भवाः त्रैविष्टपाः देवाः तेषाम् इष्टैः यज्ञैः विधिवत् प्रीणनं तोषणं विदधतु कुर्व्वन्तु, आकल्पान्तं कल्पावसानपर्य्यन्तं समुपचितसुखः समुपचितं सम्यक् परिवर्द्धितं सुखं यस्मिन् सः सज्जनानां साधूनाम् सङ्गमः संसर्गः भूयात्। वज्रलेपाः वज्रस्य लेप इव लेप यासां ताः वज्रवत् कर्कशाः दुर्ज्जयाः जेतुमशक्याः पिशुनजनगिरः पिशुनाः खलाः ये जनाः तेषां गिरः वाक्यानि निःशेषं सम्यक् शान्तिं यान्तु। अत्र तत्रभवता कविना श्रीहर्षदेवेन शास्त्राणि मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च प्रथन्ते इति महाभाष्यकारोक्त्या अस्य श्लोकस्य प्रथमे पादे प्रभूतशस्य-प्रार्थनद्वारेण प्रजानां समृद्धिः काम्यते। तथा द्वितीयपादे विप्राणां स्वास्थ्यलाभद्वारेण

तै: विप्रै: दैवप्रीणनकर्म्माचरणादिभि: चित्तविशुद्ध्यर्ज्जनं याच्यते। ततश्च आकल्पान्तं सुखकरस्वेच्छनलक्ष्मदादैश्व रसरूपब्रह्मानन्द प्राप्ति: प्रार्थ्यते। इत्याशय: ॥२१॥

इति ऐन्द्रजालिकी नाम चतुर्थोऽङ्कः

॥ अवसिताव श्रीहर्षदेवस्य कृतिरियं रत्नावली नाम नाटिका ॥

**Prose order.** विक्रमबाहु: आत्मसमतां नीत:, तथाच उर्व्वीतलै सारं भुवनप्राप्त्येकहेतु: इयं प्रिया सागरिका प्राप्ता। देवी च भगिनीलाभात् प्रीतिम् उपागता, कोशला: जिता: ; त्वयि अमात्यवृषभे सति किं तत् नास्ति यस्मै स्पृहां करोमि ? ॥२१॥

वासव: इष्टां वृष्टिं विसृजन् उर्व्वीम् उद्दामसस्यां जनयतु ; विप्रमुख्या: विधिवत् इष्टै: त्रिविष्टपानां प्रीणनं विदधतु। सज्जनानां समुपचितसुख: सङ्गम: आकल्पान्तं च भूयात् ; दुर्ज्जया: वज्रलेपा: पिशुनजगिर: नि:शेषं शान्तिं यान्तु ॥२२॥

**Beng. Trans.** বসুভূতি—রাজপুত্রি ! বাসবদত্তাকে প্রণামের দ্বারা অর্চ্চিত কর।

( রত্নাবলী তাহাই করিলেন )

বাভ্রব্য—দেবি ! যথার্থই আপনি 'দেবী' শব্দ গ্রহণ করিয়াছেন।

( বাসবদত্তা রত্নাবলীকে আলিঙ্গন করিয়া 'দেবী'শব্দের দ্বারা রত্নাবলীকে সম্মানিতা করিলেন )

বাভ্রব্য—এখন পরিশ্রম সফল হইল।

যৌগন্ধ—মহারাজ ! বলুন আপনার আর কি প্রিয় কার্য্য সাধন করিব ?

রাজা—ইহার পর কি আরও প্রিয়কার্য্য করিবার আছে ! যেহেতু—

রাজা বিক্রমবাহুকে নিজের তুল্য ( পদগৌরবে ) করিয়া লইয়াছি। পৃথিবীর সারভূতা সকলভুবনপ্রাপ্তির ( সার্ব্বভৌম-পদপ্রাপ্তির ) একমাত্র কারণ এই সাগরিকাকে প্রিয়ারূপে পাইয়াছি। ভগিনীলাভে দেবী বাসবদত্তা প্রীতিলাভ করিয়াছেন। কোশল রাজ্য জয় করা হইয়াছে ; আর আপনার মত অমাত্যশ্রেষ্ঠ থাকিতে এমন কি জিনিষ নাই যাহা আমি আকাঙ্ক্ষা করিতে পারি ? ॥২১॥

তথাপি—ইহাই হউক,—

( ভরতবাক্য )

ইন্দ্র অভিমতরূপ বৃষ্টিপাত করিয়া পৃথিবীকে শস্যপূর্ণা করুন। দ্বিজশ্রেষ্ঠগণ যথাবিধি

যজ্ঞের দ্বারা দেবতাগণের প্রীতিবিধান করুন। সাধুব্যক্তিগণের সংসর্গ সুখবৃদ্ধিকরতঃ কল্পান্তস্থায়ী হউক; এবং দুর্জ্জন ব্যক্তিগণের বজ্রতুল্য কঠোর দুর্জ্জয় কর্কশবাক্য নিঃশেষরূপে প্রশমিত হউক।২২।

( সকলে নিষ্ক্রান্ত )

ঐন্দ্রজালিকনামে চতুর্থ অঙ্ক সমাপ্ত

॥ শ্রীহর্ষকৃত রত্নাবলী-নাটিকা সমাপ্ত ॥

**Eng. Trans.** Vasubhuti—Princess, pay respectful reverence to Vásavadattá.

(Ratnávali does so)

Bábhravya—Madam, you justly possess the title of 'Queen'.

(Vásavadattá embraces Ratnávali and addresses her with the title of 'Queen').

Bábhravya—Now our troubles are crowned with success.

Yaugandha.—Your Majesty, what else can we perform to please you ?

King.—Is there anything else still to be performed for my delight ? Since—

Vikramabáhu has been made my own relation (lit : raised to a status equal to my own) ; beloved Ságariká, the quintessence of the world, the cause of universal sovereignty, has been obtained, and Queen ( Vásavadattá ) rejoices to find a sister ( in her ), and the Kosalas are subdued. Moreover, when there are you the best of the ministers, what other object can there be in the world, for which I could entertain a wish ? 21.

Yet, let this alone be my prayer—

May Indra with plentiful showers render the earth bountiful of grain ; may the best of the Bráhmanas satisfy the gods (lit : heavenly beings) with due performance of sacrifices ; may

the extremely blissful association of the pious last until the end of the Kalpas ( Cycles ); and may the appalling and adamantine blasphemes of the wicked be silenced for ever ! ! ! 22.

(All exeunt)

[Here ends the Fourth Act entitled "The Conjuror."]

**Here ends the Minor Drama Ratnavali Natika composed by Lord Shri Harsha Deva.**

॥ शुभमस्तु ॥



# RATNAVALI

## ACT IV

### Notes

The action of Act IV takes place in the Royal Palace of Vatsa. The Act is based upon the workings of विमर्श ( अवमर्श ) सन्धि and निर्वहण सन्धि ; since in the Nátiká, अवमर्शसन्धि is very brief. (See Critical Remarks and Appendix ). Here in the Interlude, Susangatá entering in a dejected mood relates the deplorable fate of Ságariká who, after the incident related in Act III, has been taken to some unknown destination by the enraged Queen with a rumour that she has been sent to Ujjayini, the capital of the kingdom of Vásavadattá's father. Susangatá carries out the request of Ságariká who handed over her jewel-necklace ( Ratnávali ) to be given to some worthy Bráhmana when she was going to meet some terrible fate. This Jewel-necklace being handed over to Vasantaka is worn by him at the request of the King himself. It becomes a sort of help for the the Simhalese minister Vasubhuti to recognize the Princess Ratnavali.

P. 317. लज्जालुके—सम्बोधन of लज्जालुका। लस्ज् + आलुच् ( शीलार्थे ) + क ( स्वार्थे ) + टाप् स्त्रियाम् ।

सौम्यदर्शने—सम्बोधन of सौम्यदर्शना। सौम्यं दर्शनं यस्याः ( बहु ) सा। सौम्य means 'beautiful.'—'सौम्यो ज्ञे यस्त्रिष्वनुग्रे मनोज्ञे सोमदैवते'—मेदिनी ।

उदारशीले—Of magnanimous character ; उदारं शीलं यस्याः ( बहु ) सा । "उदारो दातृमहतोः"—अमरः । "शीलं स्वभावे सद्वृत्ते"—अमरः ।

P. 318. N.B. अत्याहितम्—A great calamity. अतीव आधीयते अस्मिन्

(what puts excessive strain on the mind) इति अति – आ + धा + क्त कर्म्मणि। "अत्याहितं महाभीतिः कर्म्म जीवानपेक्षि च"—अमरः। जीवानपेक्षि कर्म्म means "the deed that carries risk of life." अत्याहितम् is adjectively used to किमपि।

तपस्विनी—Deserving compassion i. e., poor, wretched.

अर्द्धरात्रे—भावे ७मी ; रात्रेः अर्द्धम् (एकदेशीतत्) by the rule "अर्द्धं नपुंसकम्"। रात्रि becomes रात्र—"रात्राह्नाहाः पुंसि"। अर्द्ध = exact half.

P. 319. अतिनिर्घृणम्—Very carefully ; निर् (नास्ति) घृणा यस्मिन् यथा स्यात् तथा (बहु) ; अतिशयेन निर्घृणम् (प्रादितत्)। घृणा means करुणा according to अमर।

P. 322. महाभिजनसमुत्पन्नया—महान् अभिजनः (कर्म्मधा) तस्मिन् समुत्पन्ना (७मीतत्) तया। अभिजन means 'family.' "अभिजनः कुले कुलध्वजे जन्मभूम्याम्"—हेमचन्द्रः।

Pp. 324-25. Shloka 1. In this stanza the King means to say that the angry Queen was not to be pacified by any means so long as she maintained her pent-up anger ; but as soon as she gave vent to her feelings by weeping, her anger abated. Outward expression lessens (to a great extent) the tyranny of unexpressed feelings. Cf. : "पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रिया। शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते"—उत्तरचरिते III. 1.

सव्याजैः—Full of pretexts (excuses). व्याजेन सह विद्यमानाः (बहु) तैः। व्याज means pretext—"व्याजोऽपदेशो लक्ष्यं च"—अमरः।

**N. B.** In order to create confidence in the mind of the Queen regarding the faithful nature of his love, the King has to swear to her with a play of tricks that he is not in love with any other woman.

चित्तानुवृत्त्या—करणे ३या ; चित्तस्य अनुवृत्तिः ( ६ष्ठीतत् ) तया । अनुवृत्ति means अनुगमन i. e., humouring.

प्रत्यासत्तिम्—Proximity, nearness; hence favourable disposition. प्रति - आ + सद् + क्तिन् ।

N. B. The Queen's anger was pacified by itself, when she eased her suppressed feelings by means of weeping.

The metre is शार्दूलविक्रीड़ितम् । The figure of speech is समाधि, as the effect ( pacification of anger ) has been produced by some other cause, that is, weeping, swearing etc.

"समाधिः सुकरं कार्य्यं कारणान्तरयोगतः" का: प्र: १०।१२५

**Ch. of voice**—...उपागतया......देव्या ( प्रत्यासत्तिरुपगता देव्या)...रुदती सा कोपम् अपनीतवती ॥१॥

P. 325. Shloka 2. अम्भोजगर्भ etc.—अम्भसि जायते इति ( उपपदतत् ) तस्य गर्भः ( ६ष्ठीतत् ) तद्वत् सुकुमारा ( उपमानकर्म्मधा ) तादृशी तनुः यस्याः ( बहु ) सा । अम्भोज means पद्म ।

प्रथमरागघने—Adj. to कण्ठग्रहे । Deep with first love. प्रथमः रागः ( कर्म्मधा ) तद्वत् घनः ( उपमानकर्म्मधा ) तस्मिन् । रञ्ज् + घञ् = रागः, love.

कण्ठग्रहे—Embrace. कण्ठस्य ग्रहः ( ६ष्ठीतत् ) तस्मिन् ।

विलीय—Melting.

N. B. The King means to say that his beloved Ságariká being embraced with the warmth of first love, has, as it were, melted away and has found her way to his heart through the space made by the arrows of Cupid, that is, he is in a distracted condition owing to his heart being in a lovelorn condition without Ságariká.

सद्यःपतन्मदनमार्गण etc.—करणे ३या । सद्यः पतन्तः ( सुप्सुपा ) मदनस्य मार्गणाः ( ६ष्ठीतत् ) सद्यः पतन्तः मदनमार्गणाः ( कर्म्मधा ) तेषां रन्ध्राणि (६ष्ठीतत् )

तेषां मार्गाः ( ६ष्ठीतत् ) तैः । मार्गण means "arrow"—"कलम्बमार्गणशराः"—अमरः ।

The metre is वसन्ततिलकम् । The figure of speech is उत्प्रेक्षा ।

**Ch. of voice**—...तन्वा......अमुया...मन्यते......प्रियतमया......प्रविष्टया ( भूयते or, हृदयं प्रविष्टम् ) ॥२॥

विश्रामस्थानम्—विश्रामस्य स्थानम् ( ६ष्ठीतम् ); the form विश्राम is erroneous according to Pánini. The proper form is विश्रम । The unjustifiability of the form is referred to in काशिका—"सूर्य-विश्रामभूमिरित्येवमादिकं प्रयोगम् अन्याय्यमेव मन्यते इति" ।

निर्भरोत् etc.—निर् निःशेषेण भरः यस्यां सा ( बहु ) निर्भरा उत्कण्ठा ( कर्मधा ) तेन परिक्षामः ( ३यातत् ) तम् । परि – क्षै + क्त = परिक्षामः, emaciated; cf. "एवमुत्सुकोऽपि प्रियदर्शनो देवः"—Shákuntala, VI.

P. 329. Sl. 3. अदक्षिणम्—Not generous. न दक्षिणः ( नञ्तत् ) तम् । "दक्षिणे सरलोदारौ"—अमरः ।

N. B. The King says so because he could not yet follow Ságariká to her fate, inspite of his hearing that something calamitous has happened to his beloved.

मूषिताः—Deprived; मुष् ( to steal ) + कर्मणि क्त । Conj. मुष्णाति etc. ( क्र्यादि ) ।

The metre is वसन्ततिलक । The figure of speech is दीपक mingled with काव्यलिङ्ग ।

P. 330. निरनुरोधिता—The state of being in want of regard. निर् – अनु + रुध् + णिनि स्त्रियामीप् = निरनुरोधिनी, तस्याः भावः इति निरनुरोधिनी + तल् ( भावे ) + टाप् स्त्रियाम् ।

Sl. 4. In this shloka the King observing the jewel-necklace offered by Vidushaka, means to say that the necklace

is of the same deplorable fate as his own body. The King had the embrace of Ságariká and lost her at last. Similarly the necklace which Ságariká used to wear in her neck was separated from the touch of her body. In this respect the necklace and the body of the King being of the same fate, the King is getting much consolation from the necklace of his beloved, as one of the two ill-fated friends consoles the other.

कण्ठाश्लेषम्—Embrace in the neck. कण्ठस्य आश्लेषः ( ६ष्ठीतत् ) तम्। आ – श्लिष् + घञ् = आश्लेषः, embrace.

तुल्यावस्था—Adj. to सखी। तुल्या अवस्था यस्याः ( बहु ) सा।

आश्वास्यते—Is consoled ; आ – श्वस् + णिच् + लट् ते कर्म्मणि।

The metre is अनुष्टुप् and the figure of speech is उपमा।

**Ch. of voice**—......प्रभ्रष्टा इयं तुल्यावस्थां सखीमिव इमां तनुम् आश्वासयति ॥४॥

धृतिम् etc.—Will have patience. धृति means patience—"धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु"—विश्वः।

P. 334. अहोभिः—अपवर्गे तृतीया।

अनेककरि etc.—Adj. बलसमूहेन। न एकम् अनेकम्। करिणश्च तुरगाश्च पत्तयश्च इति करितुरगपत्ति ( समाहारद्वन्द्वः ) by the rule "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्". इति क्लीवलिङ्ग एकवचनम्। अनेकं करितुरगपत्ति ( कर्म्मधा ) तेन दुर्निवारः ( ३यातत् ) तेन।

अवष्टभ्य—Besieging. अव – स्तम्भ् + ल्यप्। Conj. स्तभ्नाति etc. ( क्र्यादि )।

समावासयितुम्—To encamp. सम् – अव + वास ( to sit ) + णिच् + तुम्।

हास्तिकप्रायम्—Adj. to आत्मसैन्यम्। हस्तिनां समूहः इति हास्तिकम् हस्ती + ठक् by the rule "अचित्तहस्तिधेनोष्ठक्"। प्रायेण हास्तिकम् ( ३यातत् ) or

कालिकं प्राय: यस्मिन् ( बहु )। प्र – अय् (to go) + घञ = प्राय: full of. "प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययो:"—मेदिनी।

सज्जीकृतवान्—Made ready. सज्ज – च्वि + कृ + क्तवतु।

Pp. 334-35. Sl. 5. In this shloka Vijayavarman describes how Rumanván the general of the King of Vatsa met the adversary—the King of Kosala who came to fight with a large army of elephants.

अभिमुख:—अभिगतं मुखं यस्य ( बहु ) स:।

दिग्विभागान्—दिशां विभागा: ( ६ष्ठीतत् ) तान्।

विन्ध्येन—The large array of the big elephants of dark colour presented a view of the Vindhya ranges.

द्विरदपति etc.—द्वौ रदौ येषां ( बहु ) ते द्विरदा:। तेषां पतय: ( ६ष्ठीतत् ) तेषां घटा: ( ६ष्ठीतत् ) तासां आ सम्यक् पीडा यस्मिन् ( बहु ) तादृश: बन्ध: ( कर्मधा ) तेन। बन्ध means सन्निवेश। इया करण। The alt. reading is द्विपपतिप्रतना etc.

समदगज etc.—Adj. to रुमण्वान्। मदेन सह विद्यमाना: ( बहु ) तादृशा: गजा: ( कर्मधा ) तेषां घटा: ( ७ष्ठीतत् ) तया उत्पिष्टा ( ३यातत् ) तादृशी पत्ति: यस्य ( बहु ) स:। पत्ति means "Infantry," पद् + क्तिन्।

प्रत्यैच्छत—Encountered. प्रति – इष् + लङ् त।

वाञ्छित etc.—Adj. to रुमण्वान्। वाञ्छितस्य आप्ति: ( ६ष्ठीतत ) तेन द्विगुणितम् ( ३यातत ) तादृशं रभसं यस्य ( बहु ) स:। द्वाभ्यां गुणितम् ( ३यातत् )।

N. B. Here वाञ्छिताप्ति means "The catching of the adversary King of Kosala on a hip by Rumanván." रभस means "speed." "रभसं वेगहर्षयो:"।

The metre is स्रग्धरा। The figure of speech is उपमा।

**Ch. of voice.**—...अभूयत......अभिमुखेन......रुद्धता......विमुखता...... —पत्तिना...प्रत्यैष्यत......रभसेन स:...रुमण्वता ॥५॥

P. 335. Sl. 6. The description of the battle continues—the King of Kosala is killed by Rumanván.

अस्त्रव्यस्त—व्यस्तानि शिरस्त्राणि यैः (बहु) तानि व्यस्तशिरस्त्राणि, व्यस्तशिरस्त्राणि शस्त्राणि (कर्म्मधा) अस्त्राणि च व्यस्तशिरस्त्राणि च (द्वन्द्वः) तेषां कषणानि (६ष्ठीतत्) तैः। अस् (to throw) + ष्ट्रन् = अस्त्र, missiles which are thrown. वि – अस् (to throw) + क्त कर्म्मणि = व्यस्त thrown away. शिरांसि त्रायन्ते इति उपपदसमासे शिरस् + त्रै + क = शिरस्त्रम्, helmet. कषण means "close contact (संघर्ष)" तृतीया करणे। The expression अस्त्र……कषणैः is construed with कृत्त in कृत्तोत्तमाङ्गे। The construction is justified by the dictum "सापेक्षत्वेऽपि गमकत्वात् समासः।"

कृत्तोत्तमाङ्गे—Adj. to आजिमुखे। उत्तमानि अङ्गानि (कर्म्मधा) कृत्तानि उत्तमाङ्गानि यस्मिन् (बहु) तस्मिन्। कृत्त = कृत् (to cut) + क्त कर्म्मणि। उत्तमाङ्ग means "head"; cf. "सर्व्वेषु गात्रेषु शिरः प्रधानम्।"

व्यूढासृक् etc.—Adj. to आजिमुखे। असृजः सरित् (६ष्ठीतत्) व्यूढा असृक्-सरित् यस्मिन् (बहु) तस्मिन्। वि—वह् + क्त = व्यूढ meaning विन्यस्त, विस्तृत। "व्यूढः संहतविन्यस्ते पृथुलेऽप्यभिधेयवत्"—मेदिनी। असृक् means "blood" used in neuter gender. Decline असृक्, असृजी, असृञ्जि etc.

स्वणत्प्रहरणे—Adj. to आजिमुखे। स्वनन्ति प्रहरणानि यस्मिन् (बहु) तस्मिन्। प्रह्रियते अनेन इति प्र – हृ + ल्युट् करणे = प्रहरणम्, weapon. "आयुधं तु प्रहरणम्"—अमरः।

वर्म्मोद्वलद् etc.—Adj. to आजिमुखे। वर्म्मभ्यः उद्वलन् (५मीतत्) तादृशः वह्निः यस्मिन् (बहु) तस्मिन्। उत् – वल् + शतृ = उद्वलत् issuing out.

आजिमुखे…At the commencement of the battle. आजेः मुखम् (६ष्ठीतत्) आजि means "battle."—"अथाजिः स्त्री समभूमौ च संग्रामे" मेदिनी।

The metre is शार्दूलविक्रीडित। The figure of speech is अनुप्रास।

**Ch. of voice.** ...तम् कौशलपतिं......कुमण्वान् मत्तद्विपस्थं हतवान् ॥६॥

P. 339. प्रहारव्रणित etc.—प्रहारेण व्रणितम् ( श्यातत् ) तादृशं हालिकम् ( कर्म्मधा ) प्राघेण प्रहारव्रणितहालिकम् ( श्यातत् ) or, बहु as before. व्रणः अस्य सञ्जातः इति व्रण+इतच् ( जातार्थे )।

P. 342. Sl. 7. इन्द्रजालिन etc.···इन्द्रजालिके पिनद्धम् ( श्मीयत ) तादृशं नाम यस्य ( बहु ) तस्य। अपि-नह्+क्त कर्म्मणि। अ of अपि is elided by the dictum "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः"।

शम्बरस्य—It is the name of a demon who was a well-known conjuror. He stole away प्रद्युम्न, the son कृष्ण and रुक्मिणी from her lying-in-room by his magical power. The magical Black Art is also popularly called शाम्बरी माया।

P. 343. Sl. 8. In this shloka the magician vauntingly states the impossibilities which he can cause to happen by his tricks.

ज्वलनः—Fire.

मध्याह्ने—अह्नः मध्यम् ( एकदेशीतत् ) तस्मिन्। It is in masculine gender by the rule "रात्राह्नाहाः पुंसि।"

अवष्टम्भः—Beginning. अव—स्तम्भ्+घञ्। "संरम्भारम्भौ: स्तम्भ"—हेमचन्द्रः।

P. 346. Sl. 10. Here the magician by his miraculous power shows to the audience various gods, demi-gods etc., in the sky.

In this connection the stanzas from Karpuramanjari where Bhairavánanda speaks in laudation of his miraculous powers, may be cited.

P. 347. Sl. 11. In this shloka the King observes various deities seated in their aerial seats and celestial nymphs dancing.

रजनिकर etc.—With the digit of the moon on his crest. रज-

निकरस्य ( चन्द्रस्य ) कला ( ६ष्ठीतत् ) सा शेखरम् ( शिरोभूषणं ) यस्य ( बहु ) सः। "शिखास्वापीड़शेखरौ"—अमरः।

दोर्भिः—With arms; उपलक्षणे ३या। Alt. form दोषभिः; दोष-शब्द—Decline—दोः दोषौ दोषः etc. "भुजबाहू प्रवेष्टो दोः"इत्यमरः।

दंत्यान्तकः—दंत्यानाम् अन्तकः (६ष्ठीतत्)। Hari.

सधनुरसि etc.—Adj. to दोर्भिः। धनुः च असिश्च गदा च चक्रञ्च ( द्वन्द्वः ) तानि एव चिह्नानि ( कर्म्मधा ) धनुरसिगदाचिह्नैः सह वर्त्तमानः ( बहु ) तैः।

त्रिदशपतिः—त्र्यधिकाः त्रिरावृत्ताश्च दश संख्या येषां ते त्रिदशाः ( बहु ) by the rule "संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये"। समासान्त डच् by the rule "बहुव्रीहौ संख्येये डजबहुगणात्" or त्रिस्रः ( बाल्यकौमारयौवनानि ) दशाः येषां ( बहु ) ते। The gods have not to undergo the fourth stage i. e., जरा (old age). त्रिदशानां पतिः ( ६ष्ठीतत् )। It means 'Indra.'

चलचरण etc.—Adj. to दिव्यनार्य्यः। चलानि चरणानि ( कर्म्मधा ) तेषु रणन्तः ( ७मीतत ) तादृशाः नूपुराः यासां ( बहु ) ताः।

The metre is स्रग्धरा।

**Ch. of voice.**—एतेन ब्रह्मणा......रजनिकरकलाशेखरेण शङ्करेणानेन......दंत्यान्तकेनामुना......एतेन ऐरावतस्थेन त्रिदशपतिना......अमीभिः देवैः अन्यैः नृत्यते......एताभिः—नूपुराभिः दिव्यनारीभिः ॥११॥

P. 351. अनुभावः—Power; भू+घञ्=भावः, अनुगतः भावः=अनुभावः ( प्रादि )। "अनुभावः प्रभावः स्यात्"—अमरः।

Sl. 12. Here Vasubhuti, the minister of Simhala describes his experiences of the Royal Palace of Vatsa, which in merit of its wealth and charm, has excelled the palace of his master, the King of Simhala.

आक्षिप्तः—Attracted, carried away; आ–क्षिप्+क्त कर्म्मणि।

जयकुञ्जरेषु—The triumphant elephants. जयद्योतकः कुञ्जरः

(शाकपार्थिवादिवत् समासः)। Such elephant is otherwise called गन्धहस्तिन् which is characterized as

"यस्य गन्धं समादाय न तिष्ठन्ति प्रतिद्विपाः।
तं गन्धहस्तिनं प्राहुर्नृपतीनां शुभावहम्॥"

N. B. Vasubhuti was attracted by the imposing appearance of these elephants.

निर्वर्णयन्—Closely observing ; निर्—वर्णि+शतृ। "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्"—अमरः।

वल्लभान्—Dear ; adj. to तुरगान्। दयितं वल्लभं प्रियम्"—अमरः।

क्षितिभृताम्—Of the kings ; क्षिति—भृ+क्विप्, षष्ठी बहुवचन।

गोष्ठीषु—Assembly. गावः (वाचः) अनेकाः तिष्ठन्ति अस्याम् इति गो—स्था+घञर्थे कः, ङीष् गौरादित्वात्। "गोष्ठी सभासंलापयोः"—मेदिनी।

सद्योविस्मृत etc.—Adj. to अहम्। सिंहलानाम् ईशः (६ष्ठीतत्) तस्य विभवः (६ष्ठीतत्) सद्यः विस्मृतः (सुप्सुपा) सद्योविस्मृतः सिंहलेशविभवः येन (बहु) सः।

कक्षाप्रदेशे—In one part of a room. कक्षायाः प्रदेशः (६ष्ठीतत्) तस्मिन्। "कक्षा प्रकोष्ठे हर्म्यादेः"—अमरः।

द्वाःस्थेन—By the porter ; द्वारि तिष्ठति यः सः द्वार्—स्था+क।

ग्राम्यः—Rustic : ग्रामे भवः इति ग्राम+यत्।

N. B. Here Vasubhuti relates how he being filled with wonder at the sight of the excellence of wealth of the Vatsa-King has been regarded as a man freshly coming from a village and totally ignorant about the city-life. Vasubhuti has an experience of the abundance of wealth of his master, but here in Udayana's palace, the super-abundance has bewildered him even to such an extent as to make him act like a rustic. A man coming fresh from village becomes surprised to the extreme at the grandeur of a town. This bewildered look of Vasubhuti leads the porter to take him for a rustic.

The metre is शार्दूलविक्रीडितम्। The figure of speech is उदात्त as the super-mundane grandeur has been described. "लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते" सा: द: १०।९४

**Ch. of voice.**—आश्रिप्तम्......निर्वर्ण्यन्तम्.......हृतम्......तिष्ठन्तम्......विभवम् द्वा:स्थ: ग्राम्यं क्रतवान् माम्.॥१२॥

Sl. 13. In this shloka Bábhravya, the chamberlain of Udayana, describes his being in a state of excessive joy which he feels at the prospect of seeing his master after a long time after the ship-wreck in which he was one of the victims. This joyful state also adds to the symptoms of his old age.

विवृद्धिम्—Increase. वि – वृध् + क्तिन्। Obj. to प्रथयतितराम।

कम्पस्य—Tremor.

N. B. Old men tremble while walking.

प्रथयतितराम्—Redoubles. Nom. परितोष:। प्रथ् + णिच् + लट् ति, then तरप् is added by the rule "द्विवचनविभज्योपपदे तरबीयसुनौ" with आमु (आम्) by the rule "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" in the sense of excellence. The form in लुङ् is अपप्रथत्।

साध्वसवशात्—Out of nervousness. साध्वसस्य वश: (इच्छीतत्) तस्मात्।

अविस्पष्टां—Indistinct ; Adj. to दृष्टिम्। न विस्पष्टाम् (नञ्तत्)

तिरयति—Covers. तिर: करोतीति तिरस् + णिच् + क्त लट् ति।

स्खलद्वर्णाम्—Adj. to वाणीम्। स्खलन्त: वर्णा: यस्यां (बहु) ताम्। With faltering syllables.

जडयतितराम्—Makes indistinct or inarticulate. अतिशयेन जडां करोतीति जड़ + णिच् + लट् ति, then तरप् is added along with आम् in the sense of excellence.

N. B. Old men tremble, have short eye-sight and speak with faltering voice. The chamberlain is an old man. In

addition to these symptoms of old age, he, out of excessive joy, feels these faults doubled in him.

The metre is शिखरिणी ।

**Ch. of voice.**—विहङ्गिः प्रथ्यतेतराम्......अविस्पष्टा दृष्टिः तिर्यते—स्खलद्वर्णा वाणी जड्यतेतराम्......परितोषेण क्रियते ॥१३॥

P. 356. सार्व्वभौमः—सर्व्वा भूमिः ( whole earth ) इति सर्व्वभूमिः । तस्याः ईश्वरः इति सर्व्वभूमि + अण् by the rule "तस्येश्वरः" = सार्व्वभौमः, a paramount monarch.

सिंहलेश्वरस्य ..रत्नावली– "Ratnávali was a daughter of the king of Ceylon. In our play we find that the name of the king was Vikramabáhu. But in the Mahávamsa the celebrated Páli chronicle of Ceylon, the king is named as Vijayabáhu. Vikramabáhu is mentioned there as being brother of रत्नावली and son of Vijayabáhu." ( Notes on Ratnávali by S. C. Vidyabhushan) "Ratnávali of our play represents Padmávati of the Kathásaritságara and Anupamá of दिव्यावदान" । (Notes on Ratnávali by S. C. Vidyábhushan)

N B. In the स्वप्नवासवदत्त of भास, the story appears to have been taken from बृहत्कथा almost as it is, but our present Drama owes greatly to the inventive genius of Shri Harsha.

P. 359. लावाणकेन वह्निना—The fire that broke out in Lávánaka, a border-district of the kingdom of Magadha (as given in कथासरित्सागर (Book III, Chapter II.)

P. 360. सम्बन्धलोप: etc.—Extinction of relationship.

N. B. The King of Ceylon is described as the maternal uncle of Vásavadattá, the wife of Udayana. So the relation between these two Kings is very close. When the rumour was spread that Vásavadattá had been burnt in a fire that broke out in Lávánaka, Vikrambáhu, the King of Simhala, with a view to maintaining the previous intimate relation, agreed

to give his daughter Ratnávali in marriage with Udayana, the King of Vatsa, but not before that, with the idea that it was not proper to cause any mental agony to his niece Vásavadattá by inflicting a co-wife on her.

मन्दभागिनी—मन्दः भागः भाग्यम् ( कर्मधा ) = मन्दभागः, सः अस्याः अस्तीति मन्द – भाग + इनिः + स्त्रीयामीप् । भाग means "share", "fate."

दुरवगाहा—Intricate, inscrutable. दुर् – अव + गाह् + खल् + टाप् ।

निदर्शनम्—Instance ; निदर्श्यते अनेन इति नि – दृश् + ल्युट् करणे ।

Sl. 14. In this shloka a description of the fire that broke out through the tricks of the magician is given.

हेमशृङ्गश्रियम्—हेम्नः शृङ्गाणि ( ६ष्ठीतत् ) तेषां श्रीः ( ६ष्ठीतत् ) ताम् ; golden tops.

N. B. The tapering flames on the palaces looked like their golden tops.

आदधानः—Assuming ; आ – धा + शानच् ; adj. to अग्निः ।

सान्द्रोद्यान etc.—Adj. to अग्निः । उद्यानानां द्रुमाः ( ६ष्ठीतत् ) सान्द्राः उद्यानद्रुमाः ( कर्मधा ) तेषाम् अग्राणि ( ६ष्ठीतत् ) तेषां ग्लपनम् ( ६ष्ठीतत् ) तेन पिशुनितः ( ३यातत् ) तादृशः अत्यन्ततीव्राभितापः यस्य ( बहु ) सः । अत्यन्तश्च तीव्रश्च ( विशेषणयोः कर्मधा ) तादृशः अभितापः ( कर्मधा ) । पिशुन इव आचरति इति पिशुन + णिच् + क्त ; "पिशुनः सूचके खले"—हेमचन्द्रः ।

ग्लपन—Burning : ग्लै + णिच् + ल्युट् । Alt. form ग्लापनम् ।

क्रीडामहीध्रम्—Artificial mountain ; क्रीडायाः महीध्रः ( ६ष्ठीतत्, अश्वघासादिवत् ) । महीं धरतीति मही – धृ + कः = महीध्र, mountain.

सजल etc.—Adj. to क्रीडामहीध्रम् । जलेन सह विद्यमानः ( बहु ) सजलः जलधरः ( कर्मधा ) तद्वत् श्यामलम् ( उपमानकर्मधा ) ।

N. B. The artificial mountain within the garden looked dark like a dark mass of clouds laden with water, on account of the columns of smoke enveloping it.

प्लोषात्त etc.— Adj. to अन्तःपुरे । प्लोषेण ( दाहेन ) आर्त्तः ( ३यातत् ) तादृशः यौषिज्जनः यस्मिन् ( बहु ) तत् । योषितां जनः ( ६ष्ठीतत् ) ; "स्त्री योषिदबला योषा"—अमरः । प्लुष् (to burn) + घञ् = प्लोषः ।

The metre is स्रग्धरा । The figure of speech is उत्प्रेक्षा ।

**Ch. of voice.**—...आदधानेन...अभितापेन...कुर्वता...एतेन......जनेन ...उत्थितेन...अग्निना ॥१४॥

P. 361. Sl. 15. देवीदाह etc.—देव्याः दाहः ( ६ष्ठीतत् ) तस्य प्रवादः ( ६ष्ठीतत् ) ।

N B. The reference is here to the incident when Yaugadharáyana, the minister falsely spread the rumour that Vásavadattá had been burnt to death in a fire that broke out in Lávánaka. This was done only with a view to bringing about the desired marriage of पद्मावती with उदयन in कथासरित्सागर and स्वप्नवासवदत्त, and of रत्नावली with उदयन in the present drama.

कथिच्यन्निव . उत्थितः— Here the King in bewilderment was under the impression that Vásavadattá was within the palace encircled with fire, though the Queen was sitting by the King. ( अये ! कथमतिसम्भ्रमात् पार्श्वस्थापि देवी नोपलक्षिता । )

N. B. This incident of magical fire breaking out in the palace is an ingenious invention of the poet, by which the final union between the hero and the heroine was brought about. (See, Critical remarks, Act IV).

P 365 पतङ्गवृत्तिः—The behaviour of the moth. N. B. Moths rush head-long towards the fire merely to be burnt off.

Sl. 16. धूमानुबन्धम्—Continuation of smoke. अनु – बन्ध् + घञ् = अनुबन्धः ।

विरहहुतभुजा—अनुक्ते कर्त्तरि or करणे ३या ; हुतं ( offerings ) भुङ्क्ते यः इति हुत – भुज् + क्विप् । विरह एव हुतभुक् ( रूपककर्म्मधा, मयूरव्यंसकादि ) ।

प्रलयदहन etc.—प्रलयस्य ( dissolution ) दहनः ( ६ष्ठीतत् ) तस्य भावः ( ६ष्ठीतत् ) तेन । करणे ३या ।

N. B. The King means to say that the fire with its destructive flames will not be able to do anything, to him, as he has not been destroyed by the fire of separation which is far more destructive than the fire burning the palace.

Thn metre is मालिनी and the figure of speech is रूपक। In the construction the fire of separation is meant to be described as superior to the fire burning the palace, which is उपमान; hence the व्यतिरेकालङ्कारध्वनि prevails here.

**Ch. of voice.**—विरम्यतां विरम्यतां मुच्यतां धूमानुबन्धः प्रकाश्यते......चक्रवालम्...विरहहुतभुक् यं मां...दग्धवान्...त्वया किं क्रियते ॥१६॥

मार्गोपदेशकः—मार्गस्य उपदेशकः (इष्टीतत्)। Now the objection may arise as to the validity of षष्ठीसमास with उपदेशक which ends in अक, as the prohibition by rule "न तृजकाभ्यां कर्त्तरि" prevails. So षष्ठीसमास is not allowed with words ending in तृच् and अक in कर्तृवाच्य। But as the सूत्रकार himself uses the words of such description in the षष्ठीसमास in his सूत्रs "जनिकर्त्तुः प्रकृतिः" and "तत्प्रयोजको हेतुश्च"—words compounded with कर्तृ and प्रयोजक, the prohibition of the rule "न तृजकाभ्यां कर्त्तरि" is not universal; शेषषष्ठीसमास is not prohibited; only कर्तृषष्ठीसमासs are debarred by the rule.

P. 366. भरतकुलम्—According to कथासरित्सागर, Udayana is descended from the line of the Pándavas.

**Arjuna**
|
Abhimanyu
|
Parikshit
|
Janamejaya
|
Shatánika
|
**Sahasránika & Mrigávati**
|
**Udayana & Vásavadattá.**

संशयतुलाम्—In a doubtful i. e., dangerous position. संशयस्य तुला ( ६ष्ठीतत् ) ताम् ।

P. 370. Sl. 17. Here the King finds Ságariká in chains and surrounded by fire.

निगड़संयता—Tied with chains. निगड़ेन संयता ( ३यातत् )

N. B. Ságariká, when detected by the Queen to be by the side of the King, was put in chains and was imprisoned in the innnermost part of the harem and a false rumour was spread that she had been taken to Ujjayini, only to throw the King off her track.

The metre is पृथ्वी ।

**Ch. of voice.**—सहसा बहलमित धूमोद्गमम्...अनेन अंशुकेन ज्वल्यते...... प्रचुरेतेन ।...स्खल्यते...निगड़संयतया । नीयते भवती । अहमेवावलम्ब्य ॥१७॥

Sl. 18. धक्ष्यति—दह् + लृट् स्यति ।

N. B. The King means to say that as the touch of Ságariká is extremely cooling, fire cannot consume him.

लग्नः—लस्ज् + क्त ।

**Ch. of voice.**—...लग्नेन...भवती...धक्ष्यते हुताशनेन ।...सन्तापः...अनेन स्पर्शेन...क्रियते... ॥१८॥

उच्छ्वसिताः—जीविताः । उत् – श्वस् + क्त कर्त्तरि ।

P. 371. Sl. 19. स्वप्ने मतिः etc.—The King cannot ascertain whether he was under dream-effects or magical power.

Comp : स्वप्नो नु माया नु मतिभ्रमो नु etc.—Shákuntala VI. 10. Also —"किं नु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया"—स्वप्नवासवदत्त ६।१७

N. B. In this connection the Jester appropriately says "भो ! मा संदेहं करेहि । इंदआलं क्खु एदं । भणिदं तेन दासीए पुत्तएण इंद-आलिएण......पेक्खिदव्वोत्ति" reminding the King about what the magician had said to the King when the latter asked the former

to postpone the performance, when the King was informed of the arrival of the Simhalese minister Vasubhuti.

P. 376. उदात्तवंश etc.—उदात्तः वंशः (कर्मधा) सः एव प्रभवः यस्य (बहु) सः। उत – आ + दा + क्त = उदात्तः, high; "उदात्तो दातमहतोर्ह्रदे च स्वरभिद्यपि"— प्रभवति अस्मात् इति प्र – भू + अप् अपादाने = प्रभवः, source, place of birth. "प्रभवो जलमूले स्याज्जन्महेतौ पराक्रमे"—विश्वः। Or प्रभवः = birth. प्र – भू + अप् भावे।

P. 379. दुर्ज्जनीकृता—दुष्टः जनः (प्रादि) दुर्ज्जनः। दुर्ज्जन – च्वि + कृ + क्त कर्म्मणि।

N. B. Vásavadattá, having no scope of knowing Ságariká to be her sister, acted cruelly towards her. So Vásavadattá lays the blame on the shoulder of Yaugandharáyana who without disclosing anything about Ságariká to the Queen, merely handed her over to the Queen as an ordinary girl. So she says "तेण जाणन्तेण वि ण मे णिवेदिदं'।

प्रथाम् उपगतः—Reached its climax. प्रथ् (to spread) + अ स्त्रियामाप्। प्रथा means प्रसिद्धि।

N. B. Yaugandharáyana here means to say that he was at the root of the estrangement that took place between the King and the Queen owing to the King's excessive inclination towards Ságariká. In the present drama वियोग is mental; but in the original and स्वप्नवासवदत्त, Vásavadattá was by tricks concealed from the eyes of Udayana who was made to believe in the rumour of the Queen's being burnt in the fire, until his marriage with पद्मावती was performed.

अन्यकलत्र etc.—अन्यं कलत्रं (कर्मधा) तत्र संघटना (इयातत्) तया। कलत्र here refers to Ságariká. "कलत्रं श्रोणिभार्य्ययोः"—अमरः।

जगत्स्वामित्व etc.—जगतः स्वामित्वम् (इष्ठीतत्) तस्य लाभः (इष्ठीतत्)।

N. B. Here this refers to the attainment of Universal

Sovereignty by Udayana after his marriage with Ratnávali as it was prophesied by the Siddha previously.

Cf. "प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं
कामं मया कृतमिदं हितमित्यवेक्ष्य ।
सिद्धेऽपि नाम मम कर्म्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥

स्वप्नवासवदत्तम्, Act VI. 15.

The metre is शार्दूलविक्रीडितम् ।

**Ch. of voice.**—उपगतेन...वियोगेण महता ( भूयते ) or देवी...अभ्युपगतवती·· वियोगं महान्तम् । तया···देव्या...प्रापितया ( भूयते ) or अहं ता देवीं··· प्रापितवान् ।...प्रीतिः करिष्यते अनेन जगत्स्वामित्वलाभेन...शक्यते ॥१९॥

अत्यन्तमाननीयेषु—अत्यन्तं माननीयाः ( सुप्सुपा ) तेषु । मन् + णिच् + अनीय विषयाधिकरणे ७मी ।

निरनुरोधवृत्ति—Adj. to स्वामिभक्तिव्रतम् । निर् नास्ति अनुरोधः यस्यां ( बहु ) सा । तादृशी वृत्तिः ( व्यवहारः ) यस्मिन् ( बहु ) तत् । Allowing no consideration of feeling. अनुरोध means 'Humouring of feeling." "अनुरोधोऽनुवर्त्तनम्"—अमरः । वृत्ति means "conduct", 'behaviour' ( व्यवहार ) ।

स्वामिभक्ति etc.—स्वामिनि भक्तिः ( ७मीतत् ) तस्याः व्रतम् ( ६ष्ठीतत् ), the vow of loyal discharge of duty.

P. 387. Sl. 21. This shloka is included within the भरतवाक्य which forms the concluding portion of the drama, expressing general prosperity of the people and successful termination of the dramatic performance.

नीतः—It has two objects—(a) आत्मसमताम् ( indirect ) and (b) विक्रमबाहुः (direct).

आत्मसमताम्—To one's own rank, that is, by the marriage with Ratnávali, a closer relationship is established with Vikrambáhu, the King of Ceylon.

सारम्—Wealth. 'सारं तु द्रविणन्याय्यवारिषु'—हेम: । अजहल्लिङ्ग ।

भुवन etc.—एक: हेतु: ( कर्मधा ) by the rule "पूर्वकालैक etc." भुवनस्य प्राप्ति: ( ६ष्ठीतत् ) तस्या: एकहेतु: ( ६ष्ठीतत् ) । This refers to the paramount kingship attained by Udayana as foretold by the Siddha.

कोसला: जिता:—Here कोसला: means कोसलजनपद । Words indicating जनपदs are used in plural number and masculine gender. Kosala is identified with the country situated along the banks of Sarayu(or Gogra). उत्तरकोशल was to the north of Ayodhyá and श्रावस्ती was its capital, while दक्षिणकोशल, in the defiles of the Vindhyas, had कुशावती as its capital.

अमात्यवृषभ:—अमात्य: वृषभ इव ( उपमितसमास: ) । वृषभ is used here in the sense of श्रेष्ठत्व । Cf.—"स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरा: । सिंहशार्दूलनागाद्या: पुंसि श्रेष्ठार्थगोचरा:"—अमर: ।

यस्मै—चतुर्थी by the rule "स्पृहेरीप्सित:" ।

विधेयम्—विध् ( तुदादि ) + याम् ( लिङ् ) ।

The metre is शार्दूलविक्रीडित ।

**Ch. of Voice**—नीतवान्...विक्रमबाहुम्...प्राप्तवान् इमाम् सागरिकाम्...... हेतुं प्रियाम् । देव्या प्रीति: उपागता...जितवान् ( अहम् ) कोशलान् । Or कोशलै: जितै: ( भूयते ) ।...केन न भूयते...विधेयेन क्रियते स्पृहा ॥२१॥

P. 388. Sl. 22. This is a benedictory shloka customarily found in the end of a drama, breathing the spirit of general welfare and prosperity ( भरतवाक्य ).

उर्वीम्—Earth. "सर्व्वंसहा वसुमती वसुधोर्व्वी वसुन्धरा"—अमरः।

उद्दामसस्याम्—Adj. to उर्वीम्। Having luxuriant growth of crops. उद्दामं सस्यं यस्यां ( बहु ) ताम्। उत्—दम्+घञ्=उद्दामः, "उद्दामो बन्धरहिते स्वतन्त्रे च प्रचेतसि"—मेदिनी। Or उद्गतं दाम ( शृङ्खलं ) यस्मात् ( बहु ) सः।

वासवः—Indra.

त्रैविष्टपानाम्—Of the gods ; तृतीयं विष्टपं ( कर्म्मधा )।

N. B. Here the numeral त्रि has been used in the sense of पूरण i. e., तृतीय by the dictum "पूरणप्रत्ययस्तु वृत्तौ गतार्थत्वान्न प्रयुज्यते"। विष्टप is otherwise spelt as पिष्टप—"पिष्टपो विष्टपोऽप्यस्त्री भुवनं च नपुंसकम्" —नामरमाला। विष्टप means स्वर्ग। "नभो विष्टपं त्रयी गौर्नाग्निश्चापि सुरालयः"— रत्नमाला। त्रिविष्टपे भवाः इति त्रिविष्टप+अण् by the rule "तत्र भवः"।

विदधतु—वि-धा+लोट् अन्तु।

विधिवत्—According to the rules. विधि+वतिप्रत्ययः अर्हार्थे। By the rule "तदर्हः"।

इष्टैः—By Sacrifices ; यज्+क्तिन् भावे नपुंसके। करणे तृया।

आकल्पान्तम्—Up to the end of cycle. कल्पस्य अन्तम् ( ६ष्ठीतत् ) कल्पान्तं यावत् आकल्पान्तम् ( अव्ययीभावः )।

कल्पलक्षणम् :—

"मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः।
दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम्"॥

One month of human span is equivalent to one day of the Pitris (Manes). One solar year of human beings is equivalent to one day of the gods. Two thousand Yugas of the gods are equivalent to one whole day and night of Brahman. And one day or one night of Brahman is called a कल्प=4320 millions of human years.

समुपचित—Adj. to सङ्गमः। समुपचितं सुखं यस्मिन् ( बहु ) सः। सम्-उप+चि+क्त=समुपचित, increased.

निःशेषम्—Adv. to निर् नास्ति शेषः यस्मिन् यथा स्यात् तथा ( बहु )।

पिशुनजन etc.—पिशुनाः जनाः ( कर्मधा ) तेषां गीः ( षष्ठीतत् ) ताः। पिशुन means "wicked." "पिशुनः खलसूचकौ"—अमरः।

दुर्ज्जयाः—Difficult to be put down. दुर्-जि+खल्।

वज्रलेपाः—Adj. to पिशुनजनगिरः। वज्रस्य लेपः इव लेप यस्याः ( बहु ) ताः। This a kind of hard cement difficult to be broken.

## Critical Remarks

Act IV of the Drama is the working of विमर्श and निर्वहण सन्धिs together as the result of which the plot arrives at its final conclusion. In Act IV Ságariká and Vasantaka being detected by the Queen in the furtherance of the clandestine love-intrigue with the King, the former were taken captives in the presence of the King to his utter remorse ; and Ságariká was imprisoned by the Queen within the palace beyond the knowledge of all persons of the harem. A false rumour was circulated that Ságariká was being taken to Ujjayini. But subsequently all traces about the girl became lost in complete obscurity. This became an insurmountable difficulty in the way of the union of the hero and the heroine. The King gave up all hopes of regaining her. Here is the working of विमर्शसन्धि—

"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः" ॥ सा: द: ६।७९-८०

Here the means of attaining the main result ( मुख्यफलोपाय ), viz., the union with Ságariká is intercepted by the undesirable

incident of the imprisonment and disappearance of the heroine. This विमर्शसन्धि is very short.

But the inventive genius of the poet ingeniously clarifies the situation by introducing the magician who with the secret direction of Yaugandharáyana produced an illusion of fire in the palace which caused an alarm in all, including Vásavadattá who forgetting everything of the past, implored the King to save Ságariká whom she had imprisoned within the palace and whom she apprehended to be consumed in the fire ( एसा क्खु मए णिग्घिणाए इध णिअडेण संजमिदा सागरिआ विवज्जदि । ता तं परित्ताअदु अज्जउत्तो ) The King got the opportunity and delivered her from the fire which was a false ( i. e., magical ) one. Vasubhuti, the Simhalese minister, who after being rescued from the shipwreck had thought Ratnávali to be lost and who then joined the army of Rumanván in his expedition to Kosala, accidentally arrived at that very moment to see the Vatsa-King with a view to get consoled, and found Ságariká alive there. But for the introduction of the magician, the union would have been a haphazard one ; so the episode of the magician has brought about the susccessful termination of the plot. After the deliverance of Ságariká from the fire by the King, all the matters point to the successful end of the drama, and all diverging points scattered throughout the drama, point to the final end i. e., the union of the hero and the heroine. Here is the conclusion of the निर्वहणसन्धि which is defined as—

"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ॥" सा: द: ६।८०-८१

The concluding speech of यौगन्धरायण with the King discloses how all the incidents manipulated throughout the Drama merged into one point i. e., the union which is aimed at in the subject-matter of the Drama. In Act IV which

is the concluding one, all the incidents, specially the incident of the performance of the magic, have been so skillfully arranged and handled, that nothing appears to abnormal, improper, irrelevent or out of context. Appearance of Bábhravya and Vasubhuti two ship-wrecked persons in the court of the King is quite suited to the occasion, and natural. Wearing of the pearl-necklace by the Vidushaka which gave a clue to Vasubhuti for being hopeful of Ságarika being alive, is a natural growth of the unhappy incident that befell Sagarika in Act III. This, together with the wonderful performance of the magician, gives a good and successful finishing touch to the theme of the Drama.



# APPENDIX A

## कथासरित्सागरे वत्सराजोत्पत्तिकथा

### द्वितीयलम्बकस्य प्रथमस्तरङ्गः

अस्ति वत्स इति ख्यातो देशो दर्पोपशान्तये ।
कौशाम्बी नाम तत्रास्ति मध्यभागे महापुरी ।
तस्यां राजा शतानीकः पाण्डवान्वयसम्भवः ।
जनमेजयपुत्रोऽभूत् पौत्रो राज्ञः परीक्षितः ॥६॥
अभिमन्युप्रपौत्रश्च यस्यादिपुरुषोऽर्ज्जुनः ।
कलत्रं भूरभूत्तस्य राज्ञी विष्णुमती तथा ।
ततस्तस्य सुतो जज्ञे सहस्रानीकसंज्ञकः ।
अथासुरैः समं युद्धे प्राप्ते साहाय्यकेच्छया ।
• शक्रान्तिकं शतानीकः सह मातलिना ययौ ॥१५॥
असुरान्यमदंष्ट्रादीन् बहून् पश्यति वासवे ।
हत्वा तत्रैव संग्रामे प्राप मृत्युं स भूपति ॥१६॥
ततः शक्रः सुहृत्पुत्रं विपक्षविजयोत्सवे ।
स्वर्गं सहस्रानीकं तं निनाय प्रेष्य मातलिम् ॥१९॥
स तत्र नन्दने देवान् क्रीडतः कामिनीसखान् ।
दृष्ट्वा स्वोचितभार्य्यार्थी राजा शोकमिवाविशत् ॥२०॥
विज्ञायैतमभिप्रायं तमुवाचाथ वासवः ।
राजन्नलं विषादेन वाञ्छेयं तव सेत्स्यति ॥२१॥
साप्यप्सरा अयोध्यायां कृतवर्म्मनृपात्मजा ।
जाता मृगावती नाम सा ते भार्य्या भविष्यति ॥२९॥

ततश्च दिवसैस्तत्र श्लाघनायमनिन्दिता ।
सत्सङ्गतिरिवाचारं पुत्ररत्नमसूत सा ॥६८॥
श्रीमानुदयनो नाम्ना राजा जातो महायशाः ॥६९॥
हरिणार्थकटके जातु भ्राम्यन्नुदयनोऽथ सः ।
शबरेण हठाक्रान्तमटव्यां सर्पमैक्षत ॥७२॥
उवाच मुच्यतामेष सर्पो मद्वचनादिति ॥७५
श्रुत्वेत्युदयनस्त्यागी दत्त्वास्मै शबराय तम् ।
कटकं जननीदत्तं स तं सर्पममोचयत् ॥७८॥
गृहीतकटके जाते शबरे पुरतो गतिम् ।
कृत्वा स भुजगः प्रीतो जगादोदयनं तदा ॥७९॥
वसुनेमिरिति ख्यातो ज्येष्ठो भ्रातास्मि वासुकेः ।
इमां वीणां गृहाण त्वं मत्तः संरक्षितास्त्वया ॥८०॥
॥ इति कथासरित्सागरे कथामुखलम्बके प्रथमस्तरङ्गः ॥

## तृतीयस्तरङ्गः

ततः स वत्सराज्यञ्च प्राप्य पित्रा समर्पितम् ।
कौशाम्ब्यामवस्थितः सम्यक् शशासोदयनः प्रजाः ॥ १ ॥
यौगन्धरायणाद्येषु भरं विन्यस्य मन्त्रिषु ।
बभूव स शनैः राजा सुखैकान्ततत्परः ॥ २ ॥
सदा सिषेवे मृगयां वीणां घोषवतीं च ताम् ।
अस्तीहोज्जयिनी नाम नगरी भूषणं भुवः ।
यस्यां वसति विश्वेशो महाकालवपुः स्वयम् ।
तस्यां महेन्द्रवर्म्माख्यो राजाभूद् भूभृतां वरः ।
जयसेनाभिधानोऽस्य बभूव सदृशः सुतः ॥ २२ ॥
जयसेनस्य तस्याथ पुत्रोऽप्रतिमदोर्बलः ।
समुत्पन्नो महासेननामा नृपतिकुञ्जरः ॥ २४ ॥

सोऽथ राजा स्वराज्यं तत् पालयन् समचिन्तयत् ।
न मे खड्गोनुरूपोऽस्ति न च भार्य्या कुलोद्गता ॥ २५ ॥
इति सञ्चिन्त्य स नृपश्चण्डिकागृहमागमत् ।
तत्रातिष्ठन्निराहारो देवीमाराधयंश्चिरम् ॥ २६ ॥
उत्कृत्याथ स्वमांसानि होमकर्म्म स चाकरोत् ।
ततः प्रसन्ना साक्षात् सा देवी चण्डी तमभ्यधात् ॥ २७ ॥
प्रीतास्मि ते गृहाणेमं पुत्र खड्गोत्तमं मम ।
एतत्प्रभावाच्छत्रूणामजेयस्त्वं भविष्यसि ॥ २८ ॥
अतीव चण्डं कर्म्मेह कृतं चैतद्यतस्त्वया ।
अतश्चण्डमहासेन इत्याख्या ते भविष्यति ॥ ४० ॥
स खड्गो मत्तहस्तीन्द्रो नडागिरिरिति प्रभो ।
द्वे तस्य रत्ने शक्रस्य कुलिशैरावणाविव ॥ ४२ ॥
अगाच्चण्डमहासेनो मृगयायै महाटवीम् ॥ ४३ ॥
अतिप्रमाणं तत्रैकं वराहं घोरमैक्षत ।
स वराहः शरैरस्य तीक्ष्णैरप्यक्षतव्रणः ।
आहत्य स्यन्दनं राज्ञः पलाय्य बिलमाविशत् ॥ ४५ ॥
तत्रस्थः कन्यकामेकामपश्यत् स्त्रीशतान्विताम् ।
का त्वं रोदिषि कस्माच्च पृष्टा तेनेति भूभृता ।
सा तं प्रत्यब्रवीदेवं मन्मथाज्ञानुवर्त्तिनी ॥ ५२ ॥
यो वराहः प्रविष्टोऽत्र स दैत्योऽङ्गारकाभिधः ।
अहं चैतस्य तनया नाम्नाङ्गारवती नृप ॥ ५३ ॥
राजापि लघुहस्तत्वात् करे तत्रैव तत्क्षणम् ।
तस्मिन् मर्म्मणि तं दैत्यं पृषत्केन जघान सः ॥७० ॥
तामङ्गारवतीं राजा गृहीत्वोज्जयिनीं ययौ ॥ ७२ ॥
परिणीतवतस्तस्य तत्र तां दैत्यकन्यकाम् ।
जातौ द्वौ तनयौ चण्डमहासेनस्य भूपतेः ॥ ७४ ॥

एको गोपालको नाम द्वितीयः पालकस्तथा ।
ततस्तं नृपतिं स्वप्ने तुष्टो वक्ति स्म वासवः ।
प्राप्स्यस्यनन्यसदृशीं मत्प्रसादात् सुतामिति ॥ ७६ ॥
ततः कालेन जातास्य राज्ञः कन्या तु तन्वाथ ।
दत्ता मे वासवेनैषा तुष्टेनेति स भूपतिः ।
नाम्ना वासवदत्तां तां तनयामकरोत्तदा ॥७९॥

॥ इति कथासरित्सागरे कथामुखलम्बके तृतीयस्तरङ्गः ॥

## चतुर्थस्तरङ्गः

( वासवदत्ताहरणोद्योगः )

इति सञ्चिन्त्य संमन्त्र्य स राजा मन्त्रिभिः सह ।
अकारयत् स्वसदृशं महान्तं यन्त्रहस्तिनम् ॥ ४ ॥
तं चान्तर्वीरपुरुषैः कृत्वा च्छन्नैरधिष्ठितम् ।
विन्ध्याटव्यां स निदधे राजा यन्त्रमयं गजम् ॥ ५ ॥
तत्र तं चारपुरुषाः पश्यन्ति स्म विदूरतः ।
गजबन्धरसासक्तवत्सराजोपजीविनः ॥ ६ ॥
ते च त्वरितमागत्य वत्सराजं व्यजिज्ञपन् ।
देव दृष्टो गजोऽस्माभिरेको विन्ध्यवने भ्रमन् ॥ ७ ॥
प्रातश्च मन्त्रिवचनं न्यक्कृत्वा गजतृष्णया ।
पुरस्कृत्यैव तांश्चारान् ययौ विन्ध्याटवीं प्रति ॥ १२ ॥
प्राप्य विन्ध्याटवीं तस्य गजस्य क्षोभशङ्कया ।
वत्सराजः स सैन्यानि दूरादेव न्यवारयत् ॥ १४ ॥
चारमात्रसहायस्तु वीणां घोषवतीं दधत् ।
निजव्यसनविस्तीर्णां तां विवेश महाटवीम् ॥ १५ ॥

ततोऽकस्माच्च निर्गत्य तस्माद् यन्त्रमयाद् गजात् ।
वत्सेश्वरं तं संनद्धाः पुरुषाः पर्यवारयन् ॥ २० ॥

सङ्गतमिलितैश्चान्यैर्योधास्तैः सैनिकैः सह ।
निन्युर्वत्सेश्वरं चण्डमहासेनान्तिकं च तम् ॥ २२ ॥

ततो वासवदत्तां तां सुतां तत्रैव भूपतिः ।
वत्सराजाय गान्धर्व्वशिक्षाहेतोः समर्पयत् ॥ २७ ॥

तस्य दृष्ट्वा तु तां कन्यां वत्सराजस्य मानसम् ।
तथा स्नेहाक्रान्तमभवन्न यथा मन्त्रमैक्षत ॥ २९ ॥

गत्वा वसन्तकसखस्ततो यौगन्धरायणः ।
उज्जयिन्यां महाकालश्मशानं प्राप स क्रमात् ॥ ४७ ॥

तत्रैनं दर्शनप्रीतो मित्रभावाय तत्क्षणम् ।
योगेश्वराख्यो वृतवान् अभ्येत्य ब्रह्मराक्षसः ॥ ४९ ॥

तेनोपदिष्टया युक्त्या ततो यौगन्धरायणः ।
न चक्रकारात्मनः सद्यो रूपस्य परिवर्त्तनम् ॥ ५० ॥

अभूच्च तेन विकृतः कुब्जो वृद्धश्च तत्क्षणात् ।
तथैव युक्त्या स तदा सिरानद्धपृथूदरम् ।
चक्रे वसन्तकस्यापि रूपं दन्तुरदुर्म्मुखम् ॥५२॥

ततो राजकुलद्वारमादौ प्रेष्य वसन्तकम् ।
विवेशोज्जयिनीं तां स तादृग् यौगन्धरायणः ॥५३॥

स च तत्र गतो दृष्ट्वं वत्सराजं ददर्श तम् ।
उन्मत्तवेषो विगलद्वाष्पो यौगन्धरायणः ॥५७॥

चकार तस्मै संज्ञां च वत्सराजाय सोऽपि तम् ।
प्रत्यभिज्ञातवान् राजा वेषप्रच्छन्नमागतम् ॥५८॥

॥ इति कथासरित्सागरे कथामुखलम्बके चतुर्थस्तरङ्गः ॥

# पञ्चमस्तरङ्गः

## ( वासवदत्ताहरणम् )

अथ वासवदत्ता सा शनैर्वत्सेश्वरं प्रति ।
गाढं बबन्ध सद्भावं पितृपक्षपराङ्मुखी ॥१॥
ततो वत्सेशनिकटं पुनर्यौगन्धरायणः ।
विवेशादर्शनं कृत्वा सर्वानन्यान् जनान् प्रति ॥२॥
वसन्तकसमक्षं च विजने तं व्यजिज्ञपत् ।
राजन् बद्धो भवांश्चण्डमहासेनेन मायया ॥३॥
सुतां च दत्त्वा संमान्य त्वामयं मोक्तुमिच्छति ।
तदस्यैनां स्वयं हृत्वा गच्छामस्तनयां वयम् ॥४॥
एवं ह्यस्य प्रतीकारो दृप्तस्य विहितो भवेत् ।
अपौरुषकृतं लोके नैव स्याल्लाघवं च वः ॥५॥
अस्ति चैतेन दत्तास्यास्तनयायाः करेणुका ।
राज्ञा वासवदत्ताया नाम्ना भद्रवती नृप ॥६॥
सा चानुगन्तुं वेगेन शक्या नान्येन दन्तिना ।
मुक्त्वा नडागिरिं सोऽपि तां दृष्ट्वैव न युध्यते ॥७॥
तदारुह्य करेणुं तां सह वासवदत्तया ।
सायुधेनापयातव्यं गन्तुं गुप्तमितस्त्वया ॥८॥
ततश्च वत्सराजोऽत्र वीणामादाय तां निजाम् ।
यौगन्धरायणात् प्राप्तैर्योगैः स्वं सितवन्धनः ॥२०॥
उपनीतप्रहरणः स्वैरं वासवदत्तया ।
करेणुकायामारोहत् स तस्यां सवसन्तकः ॥२१॥
ततो वासवदत्तापि सह काञ्चनमालया ।
सख्या रहस्यधारिण्या तस्यामेवारोह सा ॥२२॥

अथोज्जयिन्या निरगात् स हस्तिपकपञ्चमः ।
वत्सेशो निशि मत्तेभभिन्नप्राकारवर्त्मना ॥२३॥

तत्स्थानरक्षिणौ वीरौ स्वैरं स हतवान् नृपः ।
वीरबाहुं तथा तालभटं राजसुतावुभौ ॥२४॥

ततः प्रतस्थे वेगेन स राजा दयितासखः ।
हृष्टः करेणुकारूढो दधत्याषाढकेऽङ्कुशम् ॥२५॥

उज्जयिन्यां च तौ दृष्ट्वा हतौ प्राकाररक्षिणौ ।
राज्ञे न्यवेदयन् रात्रौ क्षुभिताः पुररक्षिणः ॥२६॥

सोऽप्यन्विष्य क्रमाच्चण्डमहासेनः पलायितम् ।
हृतवासवदत्तं तं वत्सराजमबुध्यत ॥२७॥

ततः पुत्रः पालकाख्योऽथ जातकोलाहले पुरे ।
अन्वधावत् स वत्सेशमधिरुह्य नडागिरिम् ॥२८॥

वत्सेशोऽपि तमायान्तं पथि बाणैरयोधयत् ।
नडागिरिः करेणुं तां दृष्ट्वा न प्रजहार च ॥२९॥

ततः स पालको भ्राता पश्चादेत्य न्यवर्त्तत ।
गोपालकेन वाक्यज्ञः पितृकार्य्यानुरोधिना ॥३०॥

वत्सराजोऽपि विस्रब्धं गन्तुं प्रववृते ततः ।

प्रातः सेनापतिश्चास्य रुमण्वान् प्रापदन्तिकम् ।
यौगन्धरायणेन प्राग् दूतं संप्रेष्य बोधितः ॥४४॥

ततश्च तमभ्यागादुज्जयिन्या वणिक् तदा ।
यौगन्धरायणसुहृत् स चागत्याब्रवीदिदम् ॥४७॥

देव चण्डमहासेनः प्रीतो जामातरि त्वयि ।
प्रेषितश्च प्रतीहारस्तेनेह भवदन्तिकम् ॥४८॥

॥ इति कथासरित्सागरे कथामुखलम्बके पञ्चमस्तरङ्गः ॥

## षष्ठस्तरङ्गः

( वत्सराजस्य कौशाम्ब्यागमनम् )

अथ विन्ध्यान्तरे तस्य वत्सराजस्य तिष्ठतः ।
पार्श्वं चण्डमहासेनप्रतीहारः समाययौ ॥१॥
स आगत्य प्रणम्यैनं राजानमिदमब्रवीत् ।
राजा चण्डमहासेनस्तव सन्दिष्टवानिदम् ॥२॥
युक्तं वासवदत्ता यत् स्वयमेव त्वया हृता ।
तदर्थमेव हि मया त्वमानीत इहाभवः ॥३॥
तदिदानीमविधिना ममास्या दुहितुर्यथा ।
न विवाहो भवेद्राजन् प्रतीक्षेथास्तथा मनाक् ॥५॥
गोपालको हि न चिरादत्रैवैष्यति मत्सुतः ।
स आस्याः स्वसुरुद्वाहं यथाविधि विधास्यति ॥६॥
स प्रतस्थे ततो देव्या सह वासवदत्तया ।
स्वपुरीं प्रति राजेन्द्रः प्रातरेवापरेऽहनि ॥१५॥
दृष्ट्वाथ पौरास्तं वत्सराजं वधूसखम् ।
प्रशान्तशोकाः शिखिनः सविद्युतमिवाम्बुदम् ॥१९॥
अथ वासवदत्ताया भ्राता गोपालकोऽचिरात् ।
आययौ सह कृत्वा तौ प्रतीहारपुलिन्दकौ ॥२२॥
ततो यथावद्वृत्ते तस्या वत्सेश्वरस्य च ।
व्ययो गोपालकोऽप्येद्युत्सवोद्वाहमहोत्सवे ॥२६॥
रतिवल्लीनवोद्भिन्नमिव पल्लवमुज्ज्वलम् ।
पाणिं वासवदत्तायाः सोऽथ वत्सेश्वरोऽग्रहीत् ॥२७॥
गोपालकार्पितैं रत्नैं राज्ञां चोपायनैस्तदा ।
पूर्णकोषो दधौ सत्यां वत्सेशो राजराजताम् ॥३१॥

निर्वर्त्तितविवाहौ तावादौ लोकस्य चक्षुषि ।
वधूवरौ विविशतुः पश्चात् स्वे वासवेश्मनि ॥५२॥

अथ सम्मानयामास पट्टबन्धादिना स्वयम् ।
निर्वृत्तोत्सवे वत्सराजो गोपालकपुलिन्दकौ ॥५३॥

राज्ञां संमाननार्थं च पौराणां च यथोचितम् ।
यौगन्धरायणस्तेन रुमण्वांश्च न्ययुज्यत ॥५४॥

तौ चाप्यपूजयद्राजा सचिवौ स्वकरार्पितैः ।
वस्त्राङ्गरागाभरणैर्ग्रामैश्च सवसन्तकौ ॥६०॥

कृतोद्वाहोत्सवः सोऽथ युक्तो वत्सेश्वरस्तया ।
मनोरथफलान्येव मेने वासवदत्तया ॥६२॥

गोपालकोऽथ वीवाहकर्त्तुः सन्देशतः पितुः ।
प्रययौ शीघ्रमाहर्त्तुं वत्सराजेन याचितः ॥६४॥

सोऽपि वत्सेश्वरो जातु चपलः पूर्व्वसङ्गताम् ।
गुप्तं विरचितां नाम भेजेऽन्तःपुरचारिकाम् ॥६५॥

तद्गोत्रस्खलितो देवीं पादलग्नः प्रसादयन् ।
लेभे सुभगसाम्राज्यमभिषिक्तस्तदश्रुभिः ॥६६॥

किं च बन्धुमतीं नाम राजपुत्रीं भुजार्ज्जिताम् ।
गोपालकेन प्रहितां कन्यां देव्या उपायनम् ॥६७॥

वसन्तकसहायः सन् दृष्ट्वोद्यानलतागृहे ।
गान्धर्व्वविधिना गुप्तमुपयेमे स भूपतिः ॥६९॥

तच्च वासवदत्तास्य ददर्श निभृतस्थिता ।
प्रचुकोप च बद्धा च सा निनाय वसन्तकम् ॥ ७० ॥
ततः प्रव्राजिकां तस्याः सखीं पितृकुलागताम् ।
स सांकृत्यायनीं नाम शरणं शिश्रिये नृपः ॥ ७१ ॥

सा तां प्रसाद्य महिषीं तया सैव कृताज्ञया ।
ददौ बन्धुमतीं राज्ञे पेशलं हि सतीमनः ॥ ७१ ॥
ततस्तं बन्धनाद्देवी सा मुमोच वसन्तकम् ॥ ७३ ॥

॥ इति कथासरित्सागरे कथामुखलम्बके षष्ठस्तरङ्गः ॥

---

## लावाणको नाम तृतीयो लम्बकः

### प्रथमस्तरङ्गः

एवं स राजा वत्सेशः क्रमेण सुतरामभूत् ।
प्राप्तवासवदत्तस्तत् सुखासक्तमानसः ॥ ३ ॥
यौगन्धरायणश्चास्य महामन्त्री दिवानिशम् ।
सेनापती रुमण्वांश्च राज्यभारमुदूहतुः ॥ ४ ॥
स कदाचिच्च चिन्तावानानीय रजनौ गृहम् ।
निजगाद रुमण्वन्तं मन्त्री यौगन्धरायणः ॥ ५ ॥
पाण्डवान्वयजातीऽयं वत्सेशोऽस्य च मेदिनी ।
कुलक्रमागता कृत्स्ना पुरं च गजसाह्वयम् ॥ ६ ॥
परिपन्थी च सर्वको प्रद्योती मगधेश्वरः ।
तत्तस्य कन्यकारत्नमस्ति पद्मावतीति यत् ।
तदस्य वत्सराजस्य कृते याचामहे वयम् ॥ २० ॥
छन्नां वासवदत्तां च स्थापयित्वा स्वबुद्धितः ।
दत्त्वाग्निं वासके ब्रूमो देवी दग्धेति सर्वतः ॥ २२ ॥
नान्यथा तां सुतां राज्ञे ददाति मगधाधिपः ।
इतीत्तन्निश्चितमतेः श्रुत्वा यौगन्धरायणात् ।
रुमण्वानब्रवीदेवं तर्हि यद्येष निश्चयः ॥ १०४ ॥

तद् गोपालकमानीय देव्या भ्रातरमादृतम् ।
संमन्त्र्य च समं तेन सम्यक् सर्व्वं विधीयताम् ॥ १०५ ॥
स च राजहितैषी सन् दुःखावहमपि स्वसुः ।
गोपालकोऽनुमेने तत् कर्त्तव्यं हि सतां वचः ॥१११॥
॥ इति कथासरित्सागरे लावाणकलम्बके प्रथमस्तरङ्गः ॥

## द्वितीयस्तरङ्गः

ततः पूर्व्वोक्तया युक्त्या वत्सराजं सवल्लभम् ।
यौगन्धरायणाद्यास्ते निन्युर्लावाणकं प्रति ॥ १ ॥
एकस्मिन् दिवसे तस्मिन् राजन्याखेटकं गते ।
कर्त्तव्यसंविदं कृत्वा गोपालकसमन्वितः ॥ ६ ॥
यौगन्धरायणो धीमान् सरुमण्वद्वसन्तकः ।
देव्या वासवदत्ताया विजनं निकटं ययौ ॥ ७ ॥
सानुमेने च विरहक्लेशप्रदायि तदात्मनः ।
किं न्वस्म न सहन्ते हि भर्तृभक्ताः कुलाङ्गनाः ॥ ८ ॥
ततस्तां ब्राह्मणीरूपां देवीं यौगन्धरायणः ।
स चकार कृती दत्त्वा योगं रूपविवर्त्तनम् ॥ १० ॥
वसन्तकं च कृतवान् काणं वटुकरूपिणम् ।
आत्मना च तथैवाभूत् स्थविरब्राह्मणाकृतिः ॥ ११ ॥
तथारूपां गृहीत्वाथ तां देवीं स महामतिः ।
वसन्तकसखः स्वैरं प्रतस्थे मगधान् प्रति ॥ १२ ॥
तन्मन्दिरमथादीप्य दहनेन रुमण्वता ।
हाहा वसन्तकयुता देवी दग्धेत्यघोष्यत ॥ १४ ॥
यौगन्धरायणः सोऽथ सह वासवदत्तया ।
वसन्तकेन च प्राप मगधाधिपतेः पुरम् ॥ १६ ॥

तत्रोद्यानगतां दृष्ट्वा समं ताभ्यामुपाययौ ।
पद्मावतीं राजसुतां वार्यमाणोऽपि रक्षिभिः ॥ १७ ॥
इयमावन्तिका नाम राजपुत्री सुता मम ।
अस्याश्च भर्त्ता व्यसनी त्यक्त्वा मां कुत्रचिद्‌ गतः ।। २१ ॥
तदेतां स्थापयाम्यद्य तव हस्ते यशस्विनी ।
यावत्तमानयाम्यस्या गत्वान्विष्याचिरात् पतिम् ॥ २२ ॥
भ्राता काणवटुश्चायमिहैवास्याः समीपगाः ।
तिष्ठत्वेकाकिनी भावदुःखं येन न यात्यसौ ॥ २३ ॥
इत्युक्ता राजतनयामङ्गीकृतवचास्तया ।
तामामन्त्र्य स सन्मन्त्री द्रुतं लावाणकं ययौ ।। २४ ॥
ततो वासवदत्तां तां स्थितामावन्तिकाख्यया ।
वसन्तकं चानुगतं तं काणवटुरूपिणम् ॥ २५ ॥
सहादाय कृतोदारसत्कारा कं हशालिनी ।
पद्मावती स्वभवनं विवेश बहुकौतुकम् ॥ २६ ॥
अत्रान्तरेऽतिदूरासु भ्रान्त्वाखेटकभूमिषु ।
वत्सराजश्चिरादागात् सायं लावाणकं पुनः ।। ४७ ॥
भस्मीकृतमपश्यच्च तत्रान्तःपुरमग्निना ।
देवीं दग्धां च शुश्राव मन्त्रिभ्यः सवसन्तकाम् ॥ ४८ ॥
भुवैव चापतद्भूमौ मोहेन हृतचेतनः ।
क्षणान्तरे स नृपतिः मंक्षुतोऽतदचिन्तयत् ॥ ५१ ॥
विद्याधराधिपः पुत्रो देव्यास्तस्या भविष्यति ।
एतन्मे नारदमुनिर्वक्ति स्म न च तन्मृषा ।। ५२ ॥
कश्चित् कालं च दुःखं मे तेनैव मुनिनोदितम् ।
गोपालकस्य चैतस्य शोकः स्वल्प इवेक्ष्यते ।। ५३ ।
यौगन्धरायणादीनां न चैषामतिदुःखिता ।
दृश्यते तेन जाने सा देवी जीवेत् कथञ्चन ।। ५४ ॥

एवं गते स्ववृत्तान्ते लावाणकगतैस्तदा ।
गत्वा मगधराजाय चारैः सर्वं निवेदितम् ॥ ५८ ॥
स तद्बुद्ध्वैव कालज्ञो वत्सराजाय तां सुताम् ।
दातुं पद्मावतीमैच्छत् पूर्वं तन्मन्त्रिमार्गिताम् ॥ ५९ ॥
प्रविश्य मगधेशस्य वत्सेशोऽप्यथ मन्दिरम् ।
सनाथं पतिवत्नीभिः कौतुकागारमाययौ ॥ ७६ ॥
तत्र पद्मावतीमन्तर्ददर्श कृतकौतुकाम् ।
स राजा पूर्णवक्त्रेन्दुजितपूर्णेन्दुमण्डलाम् ॥ ७७ ॥
तस्याश्च मालातिलकौ दिव्यावालोक्य तौ निजौ ।
एतौ कुतोऽस्या इत्येवं विममर्श स भूपतिः ॥ ७८ ॥
मुमोच स कृतोद्वाहः कराद् वत्सेश्वरो वधूम् ।
न तु वासवदत्तां तां तत्याज हृदयात् क्षणम् ॥ ८२ ॥
पद्मावत्या विसृष्टं च सुखमारुह्य वाहनम् ।
तथैव च समादिष्टैस्तन्महत्तरकैः सह ॥ ९१ ॥
आगाद् वासवदत्तापि गुप्तं संन्यस्य पृष्ठतः ।
कृतरूपविवर्तं तं पुरस्कृत्य वसन्तकम् ॥ ९२ ॥
तच्छ्रुत्वा तेषु यातेषु राजा पद्मावतीं रहः ।
पप्रच्छ मालातिलकौ केनेमौ ते कृताविति ॥ १०१ ॥
सावोचदथ मद्गेहे न्यस्ता विप्रेण केनचित् ।
आवन्तिकाभिधा यैषा तस्याः शिल्पमिदं महत् ॥ १०२ ॥
तच्छ्रुत्वैव च वत्सेशो गोपालगृहमाययौ ।
नूनं वासवदत्ता सा भवेदत्रेति चिन्तयन् ॥ १०३ ॥
तत्र वासवदत्तां तां ददर्श प्रोषितागताम् ।
उपप्लवविनिर्मुक्तां मूर्तिं चान्द्रमसीमिव ॥ १०५ ॥
पपाताथ महीपृष्ठे स शोकविषविह्वलः ।
कम्पो वासवदत्ताया हृदये तूदपद्यत ॥ १०६ ॥

ततः स कृतिनां धुर्यो धीमान् यौगन्धरायणः ।
आचम्य प्राङ्मुखः शुद्ध इति वाचमुदैरयत् ॥ ११७ ॥
यद्यहं हितकृद् राज्ञो देवी शुद्धिमती यदि ।
ब्रूत भो लोकपालास्तन्न चेद् देहं त्यजाम्यहम् ॥ ११८ ॥
इत्युक्त्वा विरते तस्मिन् दिव्या वागुदभूदियम् ।
धन्यस्त्वं नृपते यस्य मन्त्री यौगन्धरायणः ॥ ११९ ॥
यस्य वासवदत्ता च भार्या प्राग्जन्मदेवता ।
न दोषः कश्चिदेतस्या इत्युक्त्वा वागुपारमत् ॥

॥ इति कथासरित्सागरे लावाणकलम्बके द्वितीयस्तरङ्गः ॥

# बृहत्कथामञ्जरी

## कथामुखनामा द्वितीयो लम्बकः

### प्रथमो गुच्छः

भुजङ्गभङ्गिसुभगा कन्दर्पजयशालिनी ।
कौशाम्बी शाम्भवीव श्रीरस्ति स्वस्तिमती पुरी ॥ ४ ॥
अर्जुनाभिजने जातो जनमेजयसम्भवः ।
शतानीकोऽभवत्तत्र राजा राजेन्द्रशेखरः ॥ ६ ॥
बभूव तस्य राज्याब्धेः कर्णधारो महामतिः ।
मन्त्री युगन्धरो नाम शक्रस्येव बृहस्पतिः ॥ ११ ॥
ततो मुनिप्रसादेन राजा दशरथोपमः ।
दृष्टा राममिव प्राप सहस्रानीकमात्मजम् ॥ १८ ॥
अत्रान्तरे सुरपतिं दृष्टा युद्धाय सानुगः ।
आगतस्तस्य शिरसा यमदंष्ट्रो महासुरः ॥ २१ ॥

वर्त्तमाने दिवि महासङ्गरे सुररक्षसाम् ।
आनिनाय शतानीकं साहाय्ये तं पुरन्दरः ॥ २२ ॥
नीतो मातलिनाभ्येत्य सादरं स धनुर्द्धरः ।
विधाय प्रेक्षकान् देवान् जघान दितिजान् रणे ॥ २३ ॥
महिष्या सह भूपाले संप्राप्ते कीर्त्तिशेषताम् ।
भेजे राज्यं शतानीकतनयो मन्त्रिणां गिरा ॥ २६ ॥
स्वर्योषिद् ब्रह्मणः शापाद् अयोध्यायामलम्बुषा ।
जाता मृगावती कन्या भूपतेः कृतवर्म्मणः ॥ २८ ॥
ततः कालेन तनयां क्ष्मापतेः कृतवर्म्मणः ।
तामाससाद दयितां सर्व्वस्वं पुष्पधन्वनः ॥ ३५ ॥
मृगावतिं समासाद्य विलासतरुवल्लरीम् ।
सा तस्माद् गर्भमादाय भवानीवेन्दुशेखरात् ।
पाण्डिम्ना शशिलेखेव पीयूषक्षालिता बभौ ॥३७॥
अत्रान्तरे मन्त्रिवरः सेनानीश्च महीपतेः ।
द्विजो नर्म्मवयस्यश्च पुत्रान् प्राप कुलोचितान् ॥३८॥
सुतो युगन्धरस्यासीद् श्रीमान् यौगन्धरायणः ।
रुमण्वान् सुप्रतीपस्य द्विजस्य च वसन्तकः ॥३९॥
पत्नी समीहितकृति स्वेच्छया मतिरुद्दयवी ।
तस्या रक्तसरःस्नाने तत्रामन्यत भूपतिः ॥४१॥
कौसुम्भसलिलस्नाने विहिते सरसि क्षणात् ।
सखीजनगदशाधीमान् को हि दैवे पराङ्मुखे ॥४२॥
ततस्तामामिषधिया सुवर्ण्णकुलसम्भवः ।
जहार विकटः पक्षी मुग्धां दग्धविधेर्वशात् ॥४३॥
ततो यदृच्छया यातस्तां विलोक्य तथा स्थिताम् ।
निनाय करुणासिन्धुमुनिपुत्रस्तपोवनम् ॥५०॥

सुतेवाश्वासिता तव कृपया जमदग्निना ।
असूत तनयं काले सेनान्यमिव पार्व्वती ॥५१॥
तस्याकाशभवा वाणी चकारोदयनाभिधाम् ;
निजवंशशशाङ्कस्य भविष्यच्चक्रवर्त्तिन: ॥५२॥
आश्रमे स मुनीन्द्रेण कृतचूड़ादिकस्ततः ।
ववृधे बालकशशी सह मातुर्मनोरथैः ॥५३॥
विद्याकलाकलितधीर्युवा नयननन्दनः ।
सोऽपश्यन् मृगयासक्तो व्याधबद्धं भुजङ्गमम् ॥५४॥
स सर्पो मोचितस्तेन नागो भूत्वा कृताञ्जलिः ।
सख्यं विधाय पातालं निनाय तमुदारधीः ॥५६॥
पाताले प्रेमविनतस्तं वयस्यमपूजयत् ।
भगिनीं ललिताभिख्यां ददावुदयनाय सः ॥५७॥
ताम्बूलीस्रजमम्लानां वीणां घोषवतीमपि ।
अवाप्य राजतनयः फणीन्द्रात् स्वाश्रयं ययौ ॥६०॥
अत्रान्तरे स शबरः कौशाम्ब्यां वणिजं ययौ ।
सहस्रानीकनामाङ्कमणिकङ्कणविक्रयी ॥६२॥
आदाय रत्नकटकं स विभीतो महीभुजे ।
निवेद्य शबरोपितः प्रणम्य स ययौ वणिक् ॥६३॥
मृगावतीवियोगाग्निदह्यमानतनुर्नृपः ।
तदाहृतशबरीसङ्गसुधार्द्रं प्राप्य कङ्कणम् ॥६४॥
मुनिना पूजितस्तत्र दयितां विरहार्द्दिताम् ।
लेभे हर्षविशोकाश्च तनयं चातनुद्युतिः ॥१४०॥
अयं त्वत्तो नरपते मृगावत्यां यशोनिधिः ।
जातः श्रीमान् शुभो जेता धनञ्जय इवापरः ॥१४१॥
इत्युक्ते मुनिना दत्तं गृहीत्वोदयनं नृपः ।
प्रियासहायः स्वपुरीं प्रतस्थे मन्त्रिभिर्वृतः ॥१४२॥

ततः प्रविश्य कौशाम्बीं तनयाय ददौ नृपः ।
पुत्रान् युगन्धरादीनां पौरराज्यश्रिया सह ॥१४३॥
यौगन्धरायणो मन्त्री रुमण्वान् वाहिनीपतिः ।
वसन्तको नर्म्मसुहृद् राजसूनोरभूत्ततः ॥१४४॥

॥ इति क्षेमेन्द्रविरचितायां बृहत्कथायां कथामुखलम्बके प्रथमो गुच्छः ॥

## द्वितीयो गुच्छः

अत्रान्तरे ग्रथारम्भं तं ज्ञात्वोज्जयिनीपतिः ।
चक्रे चण्डमहासेनस्तज्जयाय ततं मनः ॥४ ॥
कन्या वासवदत्तेयं तद्योग्यैव सुता मम ।
निसर्गशत्रुर्नार्थ्यो मे मानी स च न याचते ॥५॥
पुत्री मे कुलसर्व्वस्वमियं गान्धर्व्ववेदिनः ।
वीणायां श्रुतितत्त्वज्ञशिष्यतां तव वाञ्छति ॥१२॥
तदेह्युज्जयिनीं देव प्रणयाद् हितुर्मम ।
इत्युक्त्वा प्रेषितो दूतः कौशाम्बीं त्वरितो ययौ ।
ततोदयनमासाद्य यथादिष्टं न्यवेदयत् ॥१४॥
वीणां वासवदत्तासौ शास्यत्यभ्येत्य मत्पुरीम् ।
शिष्यो गुरुगृहं याति नहि शिष्यगृहं गुरुः ॥१५॥
अत्रान्तरे प्रतिवचो दूताद्‌ाकर्ण्य निस्पृहम् ।
ध्यायंश्चण्डमहासेनः किमपि व्याकुलोऽभवत् ॥२१॥
आधोरणैःकृतपदं कृत्वा मन्त्रं महागजम् ।
विन्ध्याटव्यां ससर्जाशु स शैलमिव जङ्गमम् ॥२२॥
कूटकुञ्जरमालोक्य वीणामधुरगीतिभिः ।
स जिघृक्षुर्मुधा तस्थौ सेवाभिरिव दुर्ज्जनम् ॥३९॥
तस्मिन् घोषवतीध्यर्ये योधाः कुञ्जरनिर्गताः ।
अभ्यायुः सुसंरब्धाः सह सातं जिघृक्षवः ॥४१॥

तच्छ्रुत्वा स्वयमेत्याह पुनरुज्जयिनीपतिः ।
वत्सेश्वरं समासाद्य स विवेश निजां पुरीम् ॥४४॥
इत्युक्त्वा तनयामस्मै न्यवेदयदमन्दधीः ।
वीणागेयकलाज्ञाने शिष्येयं भवतामिति ॥४७॥
तां ददर्श ततो राजा नीलनीरजलोचनाम् ।
शृङ्गारमारुताधूतस्मराम्भोलहरीमिव ॥४८॥
अतान्तरं तथाभूतं ज्ञात्वा वत्सनरेश्वरम् ।
संमन्त्र्य सेनापतिना सह पौरैश्च दुःखितः ॥५८॥
यौगन्धरायणो धीमान् निर्ययौ योगकोविदः ।
व्रजन् विन्ध्याटवीं प्राप्य त्वरितस्तरुमालिनीम् ।
तत्र योगेश्वराख्येन मित्रतां ब्रह्मरक्षसा ।
प्राप्य रूपपरावृत्तिं योगं लेभे महामतिः ॥६६॥
वसन्तः सोऽपि तेनैव नीतः क्षिप्रं विरूपताम् ।
बभूव विकटाकारो हन्त्यायतनमात्मनः ॥६८॥
यौगन्धरायणः प्राप्य राजमार्गं स्खलद्गतिः ।
गायन् हसन् पठन् धावन् नृत्यं जनमहासयन् ॥६९॥
कौतुकात्तत्र नारीभिर्नीतो गान्धर्वशालिकाम् ।
कन्यागुरुं ददर्शाथ नृपं पुनरिवार्जुनम् ॥७१॥
वत्सेश्वरोऽपि संप्राप्य योगं यौगन्धरायणात् ।
ददर्श मन्मथकृतविपरीतं वसन्तकम् ॥७२॥
अथ राजानमभ्येत्य स्वैरं यौगन्धरायणः ।
विमुक्त्युपायं संमन्त्र्य योगं दत्त्वा ययौ पुनः ॥१२२॥
भद्रां भद्रवतीं नाम करिणीं लक्षणोचिताम् ।
आदायाषाढकं ज्ञात्वा दानैर्हस्तिपकं वशं ॥१२५॥
वसन्तकेन सहितः सार्द्धं वासवदत्तया ।
तत्सख्या प्रेमविश्वासभुवा काञ्चनमालया ॥१२६॥

निशि सर्व्वायुधोपेतौ कृत्वा नगररक्षिणः ।
ययौ करेणुकावेगघट्टनझात्कृतरञ्जितः ॥१३७॥
प्रयाते वत्सनृपतौ बभूवोज्जयिनीपतिः ।
मिलत्-समस्त-सुभट-व्रातकोलाहलः पुरे ॥१३८॥
नडागिरिं समारुह्य पालकः कुपितोऽथ तम् ।
पृष्ठतोऽभिससारैकस्तञ्ज्ञात्वावन्तिपोऽब्रवीत् ॥१३९॥
कोपनः पालकः शूरो मान्यो वत्सेश्वरश्च नः ।
गच्छ गोपाल तद्युद्धं निवारय जवादिति ॥१४०॥
अत्राभ्येति समादाय रत्नाश्ववरकुञ्जरान् ।
गोपालकस्तद्विवाहे विसृष्टोऽवन्तिभूभुजा ॥१६४॥
इति पान्थवणिग्वाक्यं श्रुत्वा राजा प्रियासखः ।
विसृज्य दूतान् स्वपुरीं स्वसैन्याय व्यलम्बत ॥१७५॥
अथ गोपालके प्राप्ते प्रवृत्ते च महोत्सवे ।
विवाहवसुधां राजा देव्या सह समाविशत् ॥२५१॥

इति क्षेमेन्द्रविरचिते बृहत्कथासारे कथामुखनामा द्वितीयो लम्बकः समाप्तः ।

## लावाणकनामा तृतीयो लम्बकः

### प्रथमो गुच्छः

ततः प्रियतमाकेलिविलासरसतत्परः ।
शनैर्बभूव वत्सेशः प्रजाकार्य्ये पराङ्मुखः ॥१॥
कमलाममथाहूय निशि यौगन्धरायणः ।
अचिन्तयत् प्रभुहितं मन्त्रिमूला हि सम्पदः ॥२॥
मगधाधिपतेः पुत्रीं यदि पद्मावतीं नृपः ।
प्राप्नोत्यस्मत्प्रयत्नेन तदेषा नः सहायता ॥१२॥

श्रुत्वेति मन्त्रिवचनं सेनापतिरभाषत ।
चक्रवर्त्तिवधूः सा हि भाविनीति श्रुतं मया ॥१३॥
न हि वासवदत्तायां सक्तायामस्मै महीभुजे ।
ददाति मगधाधीशो याचितोऽपि प्रियां सुताम् ॥१४॥
इत्याकर्ण्याब्रवीन्मन्त्री दग्धा देवीति कृत्रिमम् ।
कृत्वा प्रयोगं सावश्यं लभ्यते मगधात्मजा ॥१५॥
मन्त्रयित्वेति विस्रब्धं बहु यौगन्धरायणः ।
गोपालमानिनायाशु स्वपुरीं नृपसेवने ॥५५॥
कृत्वा विदितवृत्तान्तं तं नरेन्द्रहिते रतम् ।
कूटं वासवदत्तायाः दाहे निश्चयमाप्तवान् ॥५६॥
स लावाणकयात्रायां चक्रे भूपतिमुत्सुकम् ।
देवीं च कां हि जानीते चरितं प्रौढ़मन्त्रिणाम् ॥५७॥
अथ तस्मिन् मृगव्यायां क्रीड़ायै विपिनं गते ।
यौगन्धरायणोऽभ्येत्य सार्धं गोपालकादिभिः ॥७१॥
कृत्वा ज्ञातकथां देवीं प्रार्थैः पतुराह्निर्तैषिणीम् ।
गूढ़ं वसन्तकोपेतां निनाय मगधान् क्षणात् ॥७२॥
तेषु यातेषु मगधान् गोपालोऽपि कृमण्वता ।
सह लावाणकं दग्ध्वा गूढ़मन्त्रधरोऽभवत् ॥७४॥
मन्त्री ब्रह्मद्विजाकारः प्रविश्य मगधापतेः ।
कन्यकान्तःपुरं प्राह प्रौढ़ैः पद्मावतीं शनैः ॥७५॥
राजपुत्री सुतेयं मे रूपिणी तनयोऽप्ययम् ।
अन्वेष्टुमस्या गच्छामि चिरविप्रोषितं पतिम् ॥७६॥
निक्षिप्तेयं त्वयि मया सुतश्चायं प्रियंवदः ।
इत्युक्त्वा प्रययौ मन्त्री तथेत्यभिहितस्तया ॥७७॥
अवन्तिकाभिधानां तां कन्या वीक्ष्य द्विजन्मजाम् ।
मागधी देवतां मेने रूपलावण्यराशिभिः ॥७९॥

अत्रान्तरे मृगक्रीडानिवृत्तो वत्सभूपतिः ।
देवीं लावाणके दग्धामश्रौषीत् सवसन्तकाम् ॥८६॥
स समाश्वास्यमानोऽपि यत्नाद्‌ गोपालकादिभिः ।
आससाद धृतिं राजा नयहीन इव श्रियम् ॥८९॥
प्रद्योतो मगधाधीशो दूतेनाभ्यर्थ्य भूभुजे ।
दातुं पद्मावतीमैच्छत् पार्वतीमिव शूलिने ॥९३॥
प्रियं प्राप्स्यति तां प्राप्य श्रुत्वेति सचिवान्नृपः ।
अमन्यत निजोद्वाहं विरहानलदुःसहः ॥९४॥
ततस्तुरगसैन्येन मागधीं प्राप्य भूपतिः ।
विवाहवसुधां भेजे राजपुत्र्या सशोचिताम् ॥९५॥
अवन्तिकाविरचितां तिलकं मालिकां तथा ।
अम्लानां वीक्ष्य भूपालो वर्णयित्वा धृतिं ययौ ॥९८॥
कथं जीवति मे देवी नान्या वेत्ति तया विना ।
मालिकां तिलकं चेदमिति ध्यात्वा जहर्ष सः ॥९९॥
प्रविश्यान्तःपुरं तत्र नववध्वापि सङ्गतः ।
न ननन्द स्मरन् कान्तां कामकेलिकुमुद्वतीम् ॥१०१॥
ततः प्रणयवादिन्यः पद्मावत्या वशान्विताः ।
अवन्तिकां शुकच्छन्नरथेनाशु समाययौ ॥१०१॥
गोपालान्तःपुरं प्राप्तां ततस्तां वत्सभूपतिः ।
वल्लभां स्वां परिज्ञाय मुमोह विरहाकुलः ॥१०२॥
राजानं विह्वलं दृष्ट्वा देवीं चोत्कम्पितां तथा ।
पापोऽस्मि कारणमिति प्राह यौगन्धरायणः ॥१०४॥
अथाश्रुकणसन्दिग्धतारहारस्तनस्थली ।
उवाच देवी निःश्वासम्लपिताधरपल्लवा ॥१०५॥
आर्यपुत्रहितायैषा तीर्णा गूढस्थितिर्मया ।
स्वस्त्यस्त्विदानीं त्यक्ष्यामि वह्नौ दुःखालयां तनुम् ॥१०६॥

श्रुत्वेति वचनं देव्याः सह गोपालकादिभिः ।
पद्मावती च राजा च मन्त्री च रुरुदुः पृथक् ॥१०७॥

धन्योऽसि वत्सनृपते महेश्वर इवापरः ।
यस्य वासवदत्तेयं सती हृदयवल्लभा ॥१०८॥

इत्याकाशभवा वाणी सती भावविशुद्धये ।
उच्चचार नृपस्तां च श्रुत्वाभूत् स मदाकुलः ॥१०९॥

इति क्षेमेन्द्रविरचिते बृहत्कथासारे लावाणकलम्बके पद्मावतीविवाहः ।

———

# APPENDIX B

## CRITICAL ANALYSIS

Like Aristotle, Sanskrit dramatists also always paid particular attention to a well-developed plot which is the essential element of a drama being successful and interesting. Characterization, though a necessary factor comes next in importance to the development of plot. Characterization mostly depends upon the arrangement of the incidents which bring about the circumstances that become helpful to the individuals in revealing their different traits of character. So in order to make a dramatic plot, a well-constituted organic whole, shorn of its unessential characteristics,—Sanskrit dramatugy gives a detailed analysis of the technique of development of the plot.

Concerning the plot of a drama three technical terms are to be taken into consideration first, viz., अर्थप्रकृति (characteristic elements of the plot); अवस्था (stages of development of the plot) and सन्धि (junctures). These three constitute the different aspects of the plot which broadly takes two forms—आधिकारिक ( the principal or the main plot ) and प्रासङ्गिक (the subsidiary plot which may take the dimension of an episode or an incident). अर्थप्रकृतिs ( characteristic elements of the plot) are five in number such as बीज (germ) बिन्दु (drop,

which again sets in activity the course of the drama which seems to be already interrupted), पताका (episode), प्रकरी (incident) and कार्य ( denouement ) which are all प्रयोजनसिद्धिहेतवः। बीज is the brief allusion of the circumstance which develops to its ultimate end. ( "अल्पमात्रं समुद्दिष्टं बहुधा यद् विसर्पति। फलस्य प्रथमो हेतुर्बीजं तदभिधीयते"—सा: द: ६।६५-६६ ) The brief soliloquy of यौगन्धरायण in Act I—"एवमेतत् कः सन्देहः...भीत एवास्मि भर्तुः" (Pp. 18-20) is called the बीज of रत्नावली, because this initial stage develops into the conclusion of the drama ["रत्नावल्यां वत्सराजस्य सागरिकाप्राप्तिहेतुरनुकूलदैवो यौगन्धरायणव्यापारो विष्कम्भके न्यस्तं...यौगन्ध......कः सन्देहः इत्यादिना......स्वामिनो वृद्धिहेतो इत्यन्तेन"—दशरूपके १।१६ ] बिन्दु is what bridges up the break caused by some digression. [ "अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्" —सा: द: ६।६६ ] When at the end of Act I, the worship of Cupid was concluded, and Ságariká was going away, she heard the वैतालिक sing "उदयनस्येन्दोरिवोद्वीक्षते" (P. 59) and longed for seeing the King whom so long she took for Cupid in flesh and blood. This sets up the connection with what transpires in Act II. [ cf.—"रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति 'उदयनस्येन्दोरिवोद्वीक्षते' इति सागरिका श्रुत्वा ( सहर्षम् ) 'कधं एसो सो उदअणणरिंदो' इत्यादिरवान्तरार्थहेतुः" —सा. द. ६ ] "There are also five elements of the plot (arthaprakriti), which the theory not very accurately parallels with the five stages of the action.* The first is the germ (bija) whence

*The parallellism is faulty ; neither episode or incident is necessary nor corresponds to práptyáshá, and niyatápti, nor garbha, nor vimarsha. Dhanika admits this in effect ; there is no episode in Ratnávali.

springs the action, as in the Ratnávali from Yaugandharáyana's scheme to secure the princess for the king. The second, with change of metaphor, is the drop ( bindu ), which spreads out as oil on water ; the course of the drama, which has seemed to be interrupted, is again set in activity ; thus in the Ratnávali, when the festival of the god of love is over, the princess gives a decisive impulse to the motion of the drama by recognising in him, whom she deemed the god himself, the king for whom, she was destined as a bride. The other three elements are the episode, the incident and the *denouement* ( kárya )."—Keith—Sanskrit Drama, P. 298. [See दशरूपक १।१७] पताका is an episode which contributes greatly to the development of the plot ["व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते"—सा: द: ६।६७ ]. In Ratnávali the concoction of the plot made by विदूषक and सुसङ्गता which extends to a great length (i.e., the whole of Act III) may be roughly called a पताका, though Prof. Keith does not admit it. प्रकरी is an incident of small dimension, which can be illustrated by the introduction of the incident of the monkey and the Sáriká ("प्रासङ्गिकं प्रदेशस्थ चरितं प्रकरी मता"—सा: द: ६।६७) (Act II—Pp. 122-154). कार्य is the final unravelling of the plot (denouement). In रत्नावली, the final union of the hero and the heroine is the example of कार्य ।

The अवस्थाs or the stages of the development of the plot are five in number ; such as, आरम्भ, यत्न, प्राप्त्याशा, नियताप्ति and फलागम । आरम्भ (Beginning) is the first stage in which the desire to attain the final end is indicated. ( "भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये" —सा: द: ६।७१ ) । यौगन्धरायण's anxiety to put Ratnávali in

